अथ तृतीया।

१ २ ३ १ २ ३ १ २ २ ३ १ २ ३ ३ ३ १ २
अध्वर्यो अद्रिभिः सुतꣳसोमम्पवित्र आनय।

२ १ २ ३ १ २
पुनाहीन्द्रायपातवे॥ ३॥ ३३*

२ १ ५ २ १ २ १
(वैरूपे द्वे॥) अध्वर्यो२३४आ। द्रिभाइः सु३ता

१२ ३ ५ १ २ १
३म्। सोमा२म्पा२३४वी। त्रआ२१नाया२। पुना-

२ १ ५२ २ १२ ११ २ ३ १ १ १ १ १
२३। हीन्द्रा३४औहोवा। यपातवे२३४५॥ ५॥

४ ५ २ ३ ५ २ १ ५ २ २
अध्वर्यो। होअद्री। भिःसुतम्। औ३हो३वा३।

भृगुर्ऋषिः†। हे सोम! यष्टारोवयं "तं" तव स्वभूतं "दक्षं" बलम् "अद्य" अस्मिन्यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे। कीदृशम्? "मयोभुवं" सुखस्य भावयितारं "वह्निं" धनादीनां प्रापकम्‡ "पान्तं" शत्रुभ्योरक्षकम्। "पुरुस्पृहं" बहुभिः स्पृहणीयं काम्यमानम्बलमिति॥ २॥ ३२

---

* उ० ५, १, ११, १ = ऋ० ७, १, ८, १ = ऊहे ४, १, १० ;—४, २, १—२—३—४—५—६ ;—१६, २, १३—१४।

† 'वाचर्षिः—भार्गवो वा जमदग्निः'—इति ऋषि-मै०।

‡ 'वहेर्णाजिकार्यस्वेच्छेद्यः (भा० उ०)।

दक्ष,

अथचतुर्थी ।

२ ३१२३१ २ ३१ २३१२ ३१२
तरत्समन्दीधावतिधारासुतस्यान्धसः।
३२ ३१ २
तरत्समन्दीधावति ॥ ४ ॥ ३४*

१२ ३ ५ १ २ १ १
सोमा२म्या२३४वो। ओवाआ२म्नाया२। पुना२३। ह्या२इ
२ ५२ २ २१२२३१११
न्द्रा२३४ओहोवा। यपातवे२३४५ ॥ ६ ॥ ३३

५ २२१ २ १२
(तरत्तः ॥) तरत्समा। दीधावा१ता२३इ। धारा-
३ ५ २१ १ ३ ५२२ १
२सू२३४ता। स्यआ२३१धा२सा२३४ओहोवा। तरत्सम
२ २८ २ २१११
न्दीधावती२३४५ ॥ ७ ॥ ३४

उचथ्यऋषिः†। हे "अध्वर्यो!" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं सोमं "पवित्रे" "आनय" प्रापय। एतदेव दर्शयति—"इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय‡ ॥

"पुनाहि"-"पुनीहि"-इति, "आनय"-"आसृज"-इति च साम्नऋचः पाठः ॥ ३ ॥ ३३

---

* उ० ४, १. ५, १ = ऋ० ७, १, १५, १=आर० १, २, २४।

† "आङ्गिरसः"-इति ऋषि-मे०।

‡ 'पूतं कुरु'-इति स्पष्टं विवरणे।

अवत्सारऋषिः* । "मन्दी" देवानां हर्षकः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" द्रोणकलशं गच्छतिर्† । धावतीति पुनरपि तदेवाहाभ्यन्तो दरार्थं तरत्समन्दीधावतीति । यद्वा । अस्यऋचोयास्केनोक्तार्थो द्रष्टव्यः । तद्यथा—"तरति स पापं सर्वं मन्दी यः स्तौति धावति गच्छत्यूर्ध्वां गतिम्धारा सुतस्यान्धसोधारयाभिषुतस्य मन्त्रपूतस्य वाचा स्तुतस्येति (नि० प० १३, ६)" ॥ ४ ॥३४

---

* "काश्यपः"-इति ऋषि-नैमेयः ।

† अथेदं विवरणम्—"तरत्स । विनियोगोऽस्य षष्ठे उक्तः । चतुर्ऋचो भवति प्रतिष्ठायै । प्रतिष्ठायै यजमानाय अथो ये पुरुषन्तौ तरन्तध्वसावेद्य स्त्रियः पुरुषन्त्यो बहु सम्भजन्त्यो बहु पुरुषन्तरन्त-पुरुमीढाभ्यामश्वीभ्यां वैददश्विभ्यां सहस्राणि यदि न्सतामू दातुमिच्छन्ताम् तौ पुरुमीळ ईश्वेता मनसा प्राप्नमपाप्नमिति । कथं केन प्रकारेण नौ प्राप्तमिदम् । प्राप्तम् अप्रतीगृहीतं स्यादिति । तौ प्रत्येतां चतुऋर्चमप्रत्यर्थं ध्वस्रयोः । पुरुषन्त्योरमन्त्योः आदद्वहे सहस्राणि आपयन्तौ तरत् तरन् प्रतिप्रच्छेदोषतः मन्दी सोमः धावति शोधयति । तर्णावैकतयो प्राप्तं गृहीतम् अप्रतिगृहीतं भवति अन्यथापि प्राप्तं यस्य अप्रतिगृहीतं भवति गृहीतमपि यः । एवं विजानाति विनाशं सो नर्गति । तरन्त-पुरुमीळ्हौ उभयस्याप्याश्वस्यावरुध्यौ । मनुष्यस्य च देवस्य च अवरोधनार्थं तथाच गौतमः—'अप्रतिग्राह्यं प्रतिजिघृक्षन् प्रतिगृह्य वा चतुऋर्चं तरत्समन्दीत्यप्सु जपेत् ॥ तरत सः मन्दी सोमः धावति शोधेति । गच्छति वा शोधयति वा शोधयति वा पापं । न केवलं सोमः धारा अपि सुतस्य अन्धसः अन्नस्य सोमलक्षणस्यातरत् । तरति स पापं यस्य मन्दी धावति शोधयति उषा मध्यमिका वाक् धारा वा वेद विजानाति । वसूनां मर्त्यस्य देवो अवसः एवंगुणविशिष्टा धारा । ध्वस्रयोरिति व्याख्याता । आययोः पुरुषन्त्योः तु मतं तु गच्छतानि धानानां सहस्राणि च आदद्वहे—तरत्समन्दी-भवति ॥"-इति ।

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ १ २

आपवस्व सहस्रिणꣳ रयिꣳ सोम सुवीर्य्यम्।

३ १ २ १ २

अस्मे श्रवाꣳसि धारय॥ ५॥ ३५ *

५ २ २ १

(सोमसाम॥) आपवस्वा। सहस्रिणम्। ऊवाइ।

१ २ १ २ २ २ १

ऊवा२३हो। रयिꣳसोमा। सुवीरियाम्। ऊवाइ।

१ २ २ १ २ २ १

ऊवा२३होइ। अस्मेश्रवा। सिधारया। ऊवाइ। ऊवा

१ २ ५ २ २ २ ५

२३हीर। वा२३४औहोवा। ऊ२३४पा॥ ८॥ ३५

निध्रुविर्ऋषिः†। हे "सोम!" त्वं "सहस्रिणं" बहु-सङ्ख्याकं "सुवीर्यं" शोभन-सामर्थ्योपेतं "रयिं" धनं "आ पवस्व" आभिमुख्येन चर। अपिच "अस्मे"‡ अस्मासु "श्रवांसि" अन्नानि "धारय" स्थापय॥ ५॥ ३५

---

* ऋ० ७, १, ३०, १।

† "काश्यपः"-इति ऋषि-नै०।

‡ अस्मे इति, अस्मदः साप्तविभक्तिकमेव रूपं भवति। तत्र सुपामित्यादि (७, १ ३९) शेश्छन्दसीति च (६, १, ७०) सूत्रं स्मर्त्तव्यम्। तत्प्रथैव श्रूयते बहृचि। तद्यथा—"अस्मे ते बन्धुः (१, २, १५, ७)"-इत्यत्र वयमित्यर्थः। "अस्मे यातं नासत्याः सजोषाः (३, ३, ६, १९)"-इत्यत्र अस्मानित्यर्थः। "अस्मे समानेभिर्वृषभ पौं-स्येभिः (३, ३, ७, १०)"-इत्यत्र अस्माभिरित्यर्थः। "अस्मे प्रयन्धि मघवन्नृजीषिन्

अथ षष्ठी ।

१ २ ३१ २ ३ १ २ ३१२ ३२
अनुप्रत्नास आयवः पदन्नवीयो अक्रमुः ।
२ १ २ ३ १ २
रुचे जनन्त सूर्य्यम् ॥ ६ ॥ ३६ *

५ र र ५ २१
( सूर्य्यसाम ॥ ) अनुप्रत्नास आयाइवाः । पदन्न
र र ७ २ २ १ २
वीये । अक्रमूः । रुचाइजना । ता३सू । ऊम्मायेर ।
५
री२३४याम् ॥ ८ ॥ ३६

†"प्रत्नासः" पुराणाः केचिद् "आयवः" गमनवन्तोऽश्वाः "नवीयः" नवतरं "पदं" "अन्वक्रमुः" अनुक्रमन्ते ( रूपकव्यवहारेण सोमाः स्रवन्ते ) "रुचे" दीप्त्यै तदर्थं "सूर्य्यं" "जनन्त" जनयन्ति‡ ॥ ६ ॥ ३६

(६, ४, ४, १९ )"-इत्यत्र अस्मभ्यमित्यर्थः । "अस्मे आराचिद् द्वेषः सनुतर्युयोतु (६, ६, १०, २ )"-इत्यत्र अस्मदित्यर्थः । "ऊर्व इव पप्रथे कामो अस्मे ( ७, २, १, १० )"-इत्यत्र अस्माकमित्यर्थः । "अस्मे धत्त वसवो वसूनि ( ७, ४, ८, ५ )"-इत्यत्र अस्मास्वित्यर्थश्चेति ॥

* ऋ० ६, ८, १३, २ ।

† ऋषिः स एव ।

‡ अत्रेदं विवरणम्—"अनुप्रत्नासः पुरातनाः आयवः मनुष्याः वसिष्ठादयः पदं पद्यते उत्पाद्यते संसाराख्यं नवीयो नवतरं यस्मिन् कल्पे अक्रमुः क्रमितवन्तः भवेद्दीप्त्यर्थं जनन्त जनयन्त सूर्य्यम् ।"-इति ॥

अथ सप्तमी।

अर्षासोमद्युमत्तमोभिद्रोणानिरोरुवत्।
सीदन्योनौवनेष्वा॥ ७॥ ३७*

(दाढेच्युतानि त्रीणि॥) अर्षा। इहा। सोम द्युमा२त्तमा। इहा। अभाइ। इहा। द्रोणानिरो२ रुवा। इहा। सोदा। इहा। योनौवना२इषुवा। इहा१॥ १०॥

अर्षाहाउ। सोमद्युमत्तमो। भिद्रो२३णा। निरा औ३हो। रुवा२३त्। सीदाउवा। योनौवा३ने। ऊम्मायेइ। षू२३४वा॥ ११॥

अर्षासोमद्युम। त्तमाः। अर्षासोमा। द्यूमत्तमः। अभिद्रोणा२३हा। निरोरुवत्। साइदन्योमा२३उवाइ। वनाइषू३२वा३४३। औ२३४५इ। डा॥ १२॥ ३७

* उ० २, २, ११, १ = ऋ० ७, २, ४, ४ = अष्टे ३, १, ३— ४; — ७, २, १२ = अध्या १, १, ११;— १, २, १२;—२, १, ३।

अथाष्टमी।

१ २　　२ १　２ ३ १ २　３ ２ ２
वृषासोमद्युमाꣳअसिवृषादेववृषव्रतः।
३ १ २
वृषाधर्म्माणिदध्रिषे ॥ ८ ॥ ३८ *

५ र र　　२　　१
(वृषकम् ॥) वृषासोमा। द्युमाꣳ२ आसा
१ २ २　　१ २ २　५　　१ २
२इ। वृषादेवा२हा३इ। वार्षव्रा२३४ताः। वृषाधर्मा

भृगुर्ऋषिः†। हे "सोम !" "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "द्रोणानि" (प्रयोगबाहुल्यापेक्षमेतद्बहुवचनम्) द्रोणकलशानभिलक्षीकृत्य "रोरुवत्" पुनः पुनर्भृशं वा शब्दं कुर्वन् "अर्ष" आगच्छतु दशापवित्रमध्यान्निर्गतः सोमः अविच्छिन्नधारया पतन् शब्दङ्करोति खलु। तत्र दृष्टान्तः—"वनेषु" वननीयेषु‡ यज्ञेषु वनसम्बन्धिषु यज्ञकाष्ठेषु वा¶ "योनौ" स्थाने§ "आसीदन्" यद्वा। वनेषु योनौ भूमौ आसदन् पूर्वं स्थितः सन् यज्ञकाष्ठं अभ्यर्षयति सम्बन्धः ॥

"सीदन्योनौवनेष्वासीदन्"-"श्येनोनयोनिमेतिसाम्नश्छन्दः पाठौ ॥ ७ ॥ ३७

---

* उ० २, १, ३, १ = ऋ० ७, १, २८, १।

† "वारुणिः"-इति ऋषि-नैर्णयः।

‡ 'वनु यच सम्भक्तौ (आ० प०)'-इत्यस्येदं रूपमिष्टमित्यभिप्रायः।

¶ 'वनेषु उदकेषु'-इति वि०।

§ "योनिः"-इति गृहनामसु चतुर्दशं नैघण्टुकम् (३, ४)।

अथ नवमी ।

३१२ ३१ २ ३१२ ३ १ २
इषे पवस्व धारया मृज्यमानो मनीषिभिः ।

१२ ३१र २र
इन्द्रो रुचाभिगा इहि ॥ ९ ॥ ३९ *

१ २ १ १र २ १
३ । ईश्या । भाइदध्रिषे । इडा२३भा३४३ । भोर३

४५इ । डा ॥ १३ ॥

५र २र र र २
( ऐषम् ॥ ) इषेपवा । स्वधारयौहोवाइहा३४ ।

५र र २ १ ३र र र १ २ ३ २र ३५र २
औहोवा । मृज्यमा२नोमनीषिभिः । इन्द्रोरुचा । अभि

र र २ ५र र १ २ ३ १ १ १ १
गौहोवाइहा३४ । औहोवा । उप । इहीर३४५ ॥ १४ ॥ ३९

काश्यपऋषिः† । हे "सोम!" "वृषा" कामानां वर्षकस्त्वं "द्युमान्" दीप्तिमान् "असि" । अपिच हे "देव" द्योतमान सोम! "वृषा" त्वं "वृषव्रतः"‡ वर्षणशीलकर्म्मासि । किञ्च हे सोम! "वृषा" त्वं "धर्म्माणि" देवानां मनुष्याणां च हितानि कर्म्माणि¶ "दध्रिषे"-"दधिषे"-इति पाठौ ॥ ८ ॥ ३८

---

* उ० २, २, ४, १ = ऋ० ७, १, २८, ३ ।

† "मारीचः"-इति ऋषि-सै० ।

‡ "व्रतम्"-इति कर्मनामसु सप्तमं नैघण्टुकम् ( २, १ ) ।

¶ 'धर्माणि धारणानि'-इति वि० ।

अथ दशमी।

२ १ २   ३ १ २ ३ १ २   २ १

मन्द्रयासोमधारयावृषापवस्वदेवयुः।

२ १ २   ३ १

अव्यावारेभिरस्मयुः ॥ १० ॥ ४०*

५ र   २ १ र   र

(श्यावाश्वम् ॥) मन्द्रयासो। मधारया। वृषापा

२ १ २ १ १ ३

२३वा। स्वदाइ्यार२३यू:। अव्वा२३:। वार२रा२३४

५र र   २ ३ १

औहोवा। भिरस्मयू१: ॥ १५ ॥ ४०

कश्यपऋषिः†। हे "इन्दो" सोम! "मनीषिभिः" ऋत्विग्भिः‡ "मृज्यमानः" शोध्यमानस्त्वं "इषे" अस्माकमन्नाय¶ "धारया" "पवस्व" क्षर "रुचा" रोचमानेनाम्भसा§ "गाः" पशून् "अभीहि" अभिगच्छ ॥ ८ ॥ ३९

असितऋषिः‖। हे "सोम!" "वृषा" कामानां वर्षिता "देवयुः" देवकामः "अस्मयुः" अस्मत्कामश्च त्वं "अव्या" अवेः

---

* ऋ० ६, ७, २९, १।

† "मारीचः"-इति ऋषि-मेमेयः।

‡ "मनीषी"-इति मेधाविनामसु एकादशं नैघण्टुकम् (३, १५)। 'अथवा इयत धीरैः'-इति वि०।

¶ "इषम्"-इति अन्ननामसु चतुर्दशं नैघण्टुकम् (२, ७)।

§ 'रुचा दीप्त्या'-इति वि०।

‖ "काश्यपो देवलो वा"-इति ऋषि-मेमेयः।

अथैकादशी।

१ १ २   २ १ २ १ २उ   ३क २

अया सोम सुकृत्यया महाँश्चिदभ्यवर्धथाः।

२   १२   २२

मन्दान इद्वृषायसे ॥ ११ ॥ ४१॥*

५ ४   २   ४   ५   २ १२

(अयासोमीयम्॥) अयाइसोइमसुकृत्यया। महाँ

०   २   ५   १ २२   १ २   २

श्चिदा। अभ्यवार्द्धाइ३४र्थाः। मान्दानवायेइम्। वृषाइ

४

या५सा६५ईइ ॥ १६ ॥ ४१

"वारेभिः" बालैः कृते दशापवित्रे "मन्द्राय" मदकरया धारया "पवस्व" चर ॥

"अव्यावारेभिः"-"अव्योवारेषु"-इति पाठौ ॥ १० ॥ ४०

कविः ऋषिः†। हे "सोम!" "अया" अनया "सुकृत्यया" शोभनया अभिषवादि-लक्षणया क्रियया "महान्" पूज्यमानः "सन्" देवान् प्रति "अभ्यवर्द्धथाः" अभ्यवर्द्धयः। "मन्दानः इत्" मोदमानः एव "वृषायसे" वृषवदाचरसि यथा मोदमानो वृषभः शब्दं करोति तथाभिषववेलायां उपरवेषु शब्दं करोषी-त्यर्थः ॥

"अभ्यवर्द्धथाः"–"अभ्यवर्धत"-इति, "वृषायसे"-"वृषायते"-इति च पाठः ॥ ११ ॥ ४१

---

* ऋ० ७, १, ४, १।

† "भार्गवोऽयम्"-इति ऋषि-मेवेषः, "भारद्वाजः"-इति वहु०।

अथ द्वादशी।

२ १र  २र    ३ १र  २र   ३ १ २
अयंविचर्षणिर्हितःपवमानःसचेतति।

३  २र  ३र ३ २
हिन्वानआप्यंबृहत्॥ १२ ॥ ४९२*

२   १र ४र   ५
(आग्नेयम्॥) अ। औहोवाहाइ। अयंविचा।

२ १  २  १र ४र  ५  र  २
र्षणाइर्हाइता। औहोहोवाहाइ। पवमानाः। स

१  २  १र ४र  ५  र  २ १
चाइताता। औहोहोवाहाइ। हिन्वानआ। पियौ३

२  ४ ५  ४  ५
हो३। हवोवा। बृ५होइ६हाइ॥ १० ॥ ४२

जमदग्निः ऋषिः†। "विचर्षणिः" विद्रष्टा‡ "हितः" पात्रे निहितः "पवमानः" शोध्यमानः "अयं" सोमः "आप्यम्" अप्सु भवं "बृहत्" महत् धनं "हिन्वानः" प्रेरयन् "सचेतति"¶ सर्वैः सञ्ज्ञायते ॥ १२ ॥ ४९२

* ऋ० ७,१,२५,५।

† "भार्गवः"-इति ऋषि-भेदः।

‡ "विचर्षणिः"-इति पश्यति-कर्मसु पठं नैघण्टुकम् (३, ११)। चर्षणि शब्दव्याख्यानावसरे यास्कः "चायिता"-इत्याह (५,२४)। 'विचर्षणिः सर्वं पश्यति'-इति वि०।

¶ 'सचेतति सञ्ज्ञानवति'-इति वि०।

अथ त्रयोदशी।

१ २   ३ १र २र ३ १र   २र
प्रन*इन्दोमहेतुनं† ऊर्मिन्नबिभ्रदर्षसि।
३ २१ २   १ १ २
अभिदेवाँ अयास्यः॥ १३॥ ४३ ‡

१ ४ ५ र र   २   २   ५
(आयास्यम्॥) प्रनइन्दोऱ्। हौऱ्होऱ्२३४या।
२ १र   १   ५ २   र १   १
महेतुनऍ २ होऍ २ हो३या। ऊर्मिन्नबिभ्रदर्षसऍ २ होऍ
५ २   १ २   १ २   ५र र   २ १र
२ हो३या। अभाये३। दा३इवा२३४ औहोवा। अया
२ २ १११ १
सिया२३४५ः॥ १८॥

१ ४ ५ र   २   २   ५
(आयास्यमुत्तरम्॥) प्रनइन्दो। इया३४३इ३४या।
२१र   ५ २   र १   ५ २
महेतुनइया २इ३या। ऊर्मिन्नबिभ्रदर्षसइया २इ३या।
१   २   १   २   ५र र   २   २१र
अभाये३। दा२इवा२२४औहोवा। ए३। अया-
२ २ ११११
सिया२३४५ः॥ १९॥ ४३

---

* "प्रच"-इति
† "महेतम"-इति च } —म०।
‡ म० ७, १, १, १।

अथ चतुर्दशी ।

२ १२ ३१२७ ३१ ३ १२
अपघ्नन्पवतेमृधोपसोमोअराव्णः ॥

१ १ २ ३१
गच्छन्निन्द्रस्य निष्कृतम् ॥ १४ ॥ ४४*

॥ इति द्वितीय-दशति ॥

(भारद्वाजम् ॥) २ ३ ५ ४ ५
होई२३४या । २ । इयाहाइ ।

२१ २ ३१११ २ ३ ५ ४ ५
अपघ्ना२३न्पा३४५ । होई२३४या । २ । इयाहाइ ।

२१ २ ५र २ १ २ २र
वताइ । मा२ । धा२३४ । औहोवा । अपसोमो२

१ ३र १११ २ ३ ५ ४ ५
अरा२व्णा३४५ः । होई२३४या । २ । इयाहाइ ।

अथास्यऋषिः† । हे "इन्दो" क्रियमाण !‡ त्वं "नः" अस्माकं "महे" महते "तुने"¶ धनाय धनायणा "प्रार्षसि" प्रगच्छति । "न" संप्रत्यर्थे§ अथास्यवायमृषिः तव "ऊर्मिं" तरङ्गं "बिभ्रद्" धारयन् देवान् यज्ञमभि गच्छति ॥ १३ ॥ ४३

---

* उ० २, ५, १, ७, १ = ऋ० ७, १, ११, ५ ।

† "आङ्गिरसः"-इति ऋषि-निर्णयः ।

‡ "इन्दुरिन्द्रे इममेत्"-इति (४, ४१) वाक्योक्ते वर्णेवोंगार्थस्वेव दृश्यते । छन्दो ऽत्र इमे (च० प०) ।

¶ "तना"-इति धननामसु पठ्यते (२, १० नै०) अस्मा देवपाठोऽपि 'तने'-इत्येव ।

§ "नच पिपासा उपायवेभ्यो"-(नि० १, ३) इत्याधुक्तेः ।

२ १ २ ११११ २ २ ५ ४ ५
गच्छन्नार२इन्द्रार२३४५। द्दोहाइ२३४या। २। इयाहाइ।
२ १ २ २ ३२ २ २११११
स्यनाइः। का२। ता२३४। औहोवा। इ२३४५ ॥२०॥ ४४

अमहीयुः ऋषिः*। "सोमः" "वधः" हिंसकान् मनूनां† "अपघ्नन्" मारयन् "अराव्णः" अदातॄन् सत्वान् धनानामदातॄं‡ अपघ्नन् "इन्द्रस्य" "निष्कृतं"¶ स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया क्षरति ॥ १४ ॥ ४४

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य चतुर्थः खण्डः ॥४॥

---

अथ पञ्चमे खण्डे—

सैषा प्रथमा।

२ १ २ २१ २ २ १२ ३२
पुनानःसोमधारयापोवसानोअर्षसि।
१ २ २ १२ ३२ २ १ २ २ २ २ १ २ १ २ २ १ २
आरत्नधायोनिमृतस्यसीदस्युत्सोदेवोहिरण्ययः ॥१॥ ४५§

---

* "आङ्गिरसः"-इति ऋषि-विशेषः।
† 'नृपः मनुष्याणां पालको वा'-इति वि०।
‡ 'अराव्णः अदानशीलान् असुरान्'-इति वि०।
¶ 'निष्कृतं संस्कृतम्'-इति वि०, परिष्कृतमित्यर्थः।
§ ऋ० ९, ६, ९, १=ऋ० ७, ५, १६ ४=आर० १, १, १०=कठे १, १, १—२;—१, २, २०;—२, १, १;—४, १, १—५—६;—६, १, २—१२—१२;—६, २, २—१२;—१०, १, ११—१२—२०;—११, २, १९;—१३, ६, ७—१९;—१३, २, १५;—१५, २, ३—४; १७, १, १०—११—१६;—१८, १, ७—१०—११;—१९, १, २०;—२०, २, ११—१५—१६—१७;—२२, २, ८=ऊहे १, २, १०;—३, ६, ९—१०,—४, ६, ५;—४, २, ४—१५,—५, १, १४;—५, २, ८;—६, १, ७।

(आयास्यम् ॥) पुनानःसो । मा२धा२३४औहोवा ।
रा२३४मा । अपोवसानोअर्षसि । आरत्ना३धाः ।
योनाइमार्त्ता३ । आ२सा२३४औहोवा । दा२३४सी ।
उत्सो दे ३ वो३ । हा२इरा २३४ औहोवा । ण्या-
२३४ याः । ॥ २१ ॥

(माण्डवम् ॥) इया२ई३या । पुनानःसो२ । मधा
रा२३४या । अपोवसानोअर्षा२३सी । आरत्नधायोनि
मृतस्यसीदा२३सी । उत्सोदेवो२३ । हा२इरा२३४औ
होवा । ण्या३या२३४५ः ॥ २२ ॥

(आपदासम् ॥) पुनानःसोमधारया । अपोव
सानोअर्ष । ओ३वा । ओ३वा । आरत्नधायोनिमृतस्य
सीद । ओ३वा । ओ३वा । उत्सोदा२इवा२ः । ओ
३वा । ओ३वा । हिरण्या२३या२३४ः । यो२३४५इ ।
वा ॥ २१ ॥

(सोमसाम॥) पुनानःसे।५मधारया। आपे।२वासा
२। नोअर्षसी। आ।२स्नाधा२ः। योनिमात्ता२।
स्यसीदसी। ऊत्से।२दाइवा२ः। हिरण्यार२३या३४३ः।
ओ२३४५इ। डा॥२४॥

(ऐडमायास्यम्॥) आइपुना। नाःसे। मधा
रया। आपोवसा३१। नोअर्षसी। आरत्न धा३१ः।
योनिमृता। स्यसीदसी। ऊत्से।दिवा३१ः। हिरण्या-
२३या३४३ः। ओ२३४५इ। डा॥२५॥

(माण्डवम्॥) पुनानःसोमधारया। पोवसोवा।
नोअर्षसि। आरत्न। धाउवार३। होवा३हाइ। योनि
मृतस्यसीदसि। उत्से।दि। वाउवा२३। होवा३हाइ।
हिरण्यार२३या३४३ः। ओ१२३४५इ। डा॥२६॥

(उद्वत्प्राजापत्यम्॥) पुनानःसे।मधा। हो५रया।
अपोवसानअर्षे२। षासी२। आरत्नधायोनिमृतस्यसा

१ १ १ २
घो२इ । दासी२ । उत्सा२घो१इ । दा२३इवो२ ।
२१ ५ ४ ५
हिरो२३४वा । ष्या५यो६हाइ ॥ २७ ॥

५ र र र र ४ ५
( त्रौणिधनमायास्यम् ॥ ) पुनानःसोमधाहाउहोवा ।
२ १ ३ ५ १ २ १ ३ ५
रायाऋ२३४पो । वसा२ । नऋा३४५ । षा२३४सी ।
१र २ ३र ४र ५ १ र र १ २
ऋारा३४ । औहोवा । त्नधायोनिमृता २ । स्यसा३४
३ ५ १ २ ३र ४र ५ १
५इ । दा२३४सी । उत्सा३४ । औहोवा । दाइवो२ ।
२ १ १ ५
हिरा३४५ । ष्या२३४याः ॥ २८ ॥

५रर ३ ५र ४र ५ ४ २ १र
( कण्वरथन्तरम् ॥ ) पूनानःसोमधारया । ऋपोवसा ।
२ १ १ १ र रर र ३ ५र
नो३ऋार्षा३सी । ऋारत्नधायोनिमृतस्यसीदसा२३४ऐही ।
२ १र ५ २१ २ २ ३ १
उत्सोदा२३३इवाः । हिरा३१उवा२३ । ए३ । ष्ययऋा
॥ २९ ॥

४ र ३ ४र ३र ४५र
( तिरश्चीनिधनमायास्यम् ॥ ) पुनानःसोमधारया ।
२ २ ४ १ १ १ ३ ५
ए३ । औ३होपुवाऽ । ऋापो३ । वसा२ । नऋा३४५ ।
२ १ २ १ २ १ २ १
षा३सी२ । ऋारत्नधाः । योनिमृता । स्यासा३ऋा ।

२ ४ ५ २१ २ १ १
औ३होइ। दा२३४मी। उत्माऔ३हो। दाइवोर।
२ २ २ १ ११११
हिरा३४५। ण्या३या२३४५ः॥ ३०॥

५ र र र र र र र
(सदोविश्रीयम्॥) पुनानःसोमधारयाओहाओहा३इ।
५ रर र ५ ११र २र र १ १ ५ २ ५ १
औहोऔहोइवा। अपोवसानोअर्ष। स्यो३हा। यो३हा
२ ५ १ ५ १ १ १र २१रर २१२ र
३इ। औ३होइ। औ३हो३वा। आरत्नधायोनिमृतस्यसीद।
५ २ ५ २ १ ५ २ ५ २ २
स्यो३हा। ओ३हा३इ। औ३होइ। औ३हो३वा।
१ २ ५ १ ५ २ २ ५ २
उत्सोदा१इवा२ः। ओ३हा। ओ३हा३इ। औ३होइ।
५ २ २ १ १ ५र र १र
औ३हो३वा। चिर। ण्या२या२३४औहोवा। सदो
१ २ ११११
विश्रा२३४५ः॥ ३१॥

२
(स्ववासिनी द्वे॥) ओ२हो१। वाओवा। २।
२ १ २ ५र र २र
ओ२हो१। वाओवा३। ओ२वा२३४औहोवा। पुना
१२र १र १र १र २१र र १र २१र र
नःसोमधारया। पोवसानोअर्षसि। आरत्नधायोनि
२१२र १२र र१ २
मृतस्यसीदसिउत्सोदेवाः। ओ२हो१। वाओवा। २।

२ १ २ ५र र २
ओ२ह्वो१। वाओवा३। ओ२वा२३४औहोवा। ए३।
र १ १११
हिरण्यया२३४४ः॥ ३२॥

२ ३ २ १ २ ५र र
ओ३। होइ१। वाओवा३। ओ२वा२३४औहोवा।
२र १ २र १र २र १र २र र १र २१र र
पुनानःसोमधारया। पोवसानोअर्षसि। आरत्नधायो
२११र २ २ १ २
निमृतस्यसीद। स्यो३। होइ१। वाओवा३। ओ२वा
५र र १ २र र१र र १ २
२३४औहोवा। उत्सोदेवोहिरण्ययः। इडा२३भा३४३।
१
ओ२३४५इ। डा॥ ३३॥

२ २ २ २ ३ ५
(प्लवः॥) हा। वो३हा३। वो३हा। हा। ओ२३४वा।
२ २ ५ २ २ ५ २ २
हाइ। पूनाना२३४ःसो। माधारा२३४या। आपीवा
५ २ ३ ५ २ ३ ५ २
२३४सा। नोअर्षा२३४सी। आरत्ना२३४धाः। योनी
३ ५ २ ३ ५ २ ३ ५ २
मा२३४र्त्ता। स्यासीदा२३४सी। उत्सोदा२३४इवो। हाइ
३ ५ २ २ ५
रण्या२३४याः। हा। गे३हा। वो३हा३। हा।
२ ५ २ ५र र २ १२१२र
ओ२३४वा। हा३४। औहोवा। ए३। अतिविश्वानि
१र २ र२ १११
दुरितातरेमा२३४॥ ३४॥

२ र र १ ५ १ र
(रौरवम्॥) पुनानःसोमा३धारा२३४या। आपो
र र र र र ३१ १ १
वसानोअर्षस्यारत्नधायोनिमृतस्यसा२इदसाइ। ओहा३
१ १ र र र १ १ २ १ १
उवा। उत्सोदेवोरा२३हाइ। ओहा३उवा। ह्यया।
२ ४ ५ ५
ओ३होवा। होपुइ। डा॥ ३५॥

१ २ १ ४ ५ १ १
(यौधाजयम्॥ पुना२१। ना३ःसो। म। धारा
५ १ १ १ ११ १ ५
२३४या। आपो३। वसा२। नआ३४५। षा२३४सी।
१र १ १ १ २र १ १ १ १ ५
आरात्नधाः। यो। निमृता२। स्यसा३४५इ। दा२३४सी।
१ १ १ १ १ ५
उत्सा२ः। दाइवो२। हिरा३४५ण्या२३४याः॥ ३६॥ ४५

॥ इति चतुर्दशस्यार्द्धः प्रपाठकः॥

भरद्वाजादयः सप्त ऋषयः*। हे "सोम!" "पुनानः" शोधकः "अपः" वसतीवरीः† "वसानः" आच्छादयन् "धारया" "अर्षसि" गच्छसि द्रोणकलशे किञ्च "रत्नधा" रमणीयानां धनानां दाता‡ त्वम् "ऋतस्य" यज्ञस्य "योनिं" स्थानम् "आसीदसि"

---

* "सर्वासां सप्त ऋषयोभरद्वाजः काश्यपोगोतमोऽत्रिर्विश्वामित्रोजमदग्निर्वशिष्ठ इत्येते"-इति ऋषि-निर्णयः। सर्वासामेतद्दशतस्नामां द्वादशानामित्यर्थः।

† "अपः उदकानि"-इति वि०।

‡ 'रत्नान् धारयन्'-इति वि०।

अथ द्वितीया ।

२ ३ १ २　३ १उ　१ १ २ १ २　१ २
परितोषिञ्चतासुतꣳसोमोयउत्तमꣳहविः ।
२ १र　२र ३ २ ३२उ १ १ २ १ २ १ २
दधन्वाङ्योनर्योअप्स्वा३ंतरा*सुषावसोममद्रिभिः ॥ः ॥४६†

५ र र　२
(अच्छिद्रम्.॥) परीतोषी । चता३१उवार२३ । ह२
५　१र २र　१ २ १　२ १　५र र　२
३४ताम् । सोमोर२यउत्तमꣳहवोः । सो मो यज्ञ । तमा
५　२ १र　२ २र　१ २ १र
३१उवार२३ । हा२३४वोः । दधन्वाꣳयोनर्यो२प्सुवन्तरा ।
५ र　१ २र　१　२
दधन्वाꣳयाः । नर्यो२ । आ । प्सुवा३१उवा२३ । ता
५　२ १र र　३　५ र　२
२३४राः । सुषावसोममद्रिभो२३४ः । सुषावसो । ममा
५
३१उवार२३ । द्रा२३४द्रभोः ॥ १ ॥

अपि च "देवः" द्योतमानः सोमः "उत्सः" प्रस्यन्दनशीलः सन् "हिरण्ययः"‡ देवानां हिततमणीयो¶ भवसि खलु ॥

"देवो"-"देव"-इति साम्नऋचः पाठौ ॥ १ ॥ ४५

---

* "स्वां १तरा"-इति ऋ० स्वरपाठः ।

† उ० ५, ०, ११, १=ऋ० ७, ५, १२, १=अहे ५, २, १,—२—३—४—५—६; —७, १, ३—४;—७, २, ३—४;—८, १, ३;—८, २, ४;—८, ३, ७—११;—१२, १, १८;—१२, २, २०;—१५, १, ६;—१५, २, १२—१३—१४;—१६, १, ५—६;—१८, १, १८—अह्ये १, १, २—३—४—५—६—७—१२;—२, २, ६—१०।

‡ "ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि (पा० ६, ४, १७५)।

¶ 'हिरण्ययः अमृतमयः'-इति वि० ।

(रयिष्ठम्॥) परीतोषी। चताहृ३ताम्। औ३होइ३वा। औ३होइ३वा। ई३या। ई३या३४। हा। हाउवा। सोमोरयउत्तमꣳहवीः। सोमोयज्ञ। तमाꣳहा३वीः। औ३होइ३वा। औ३होइ३वा। ई३या। ई३या३४। हा। हाउवा। दधन्वाꣳयोनर्यो२प्सुवन्तरा। दधन्वाꣳयाः। नर्यो२। आ। प्सृ३वान्ता३रा। औ३होइ३वा। औ३होइ३वा। ई३या३४। हा। हाउवा। सुषावसोममद्रिभी२३४ः। सुषावसो। ममाद्री३भाइ। औ३होइ३वा। औ३होइ३वा। ई३या। ई३या३४। हा। हाउवा३। ऊ२३४पा॥ २॥

(भारद्वाजे द्वे॥) औहोइपरीतोषी। चतासुतम्। औ३होइ। औहोइ। आ३। औहो३वा। सोमो२यउत्तमꣳहविः। औ३होइ। औहोइ। आ३। औहो३वा। दधन्वाꣳयोनर्यो२प्सुवन्तरा। औ३होइ। औ--

१ ऽ १र २ १र र २ ऽ
होइ। आ३। औहो३वा। सुषावसो३मद्रिभिः। औ
२ १र २ १ ५ ५
३होइ। औहोइ। आ२३४। उहुवाहाउ। वा॥ २॥

४ ५ २र १ ऽर १
प। ऐंपारी। नार्षिष्वतो२स्तुतम्। आउवा२३।
१र ३ २र ३ ऽ २ १र ऽर १ २ १ २ १
हाउहाउ। हो३वा। सोमो२यउत्तमꣳहविः। आ-
२र ३ २र ३ ऽ २ १र र ऽर
उवा२३। हाउहाउ। हो३वा। दधन्वाꣳयोनर्यो२
१ २ १ १र ३ १र ऽ २ १र
अप्सुवन्तराउ। वा२३। हाउहाउ। हो३वा। सुषावा
२ २र १ २र १ ऽ १ १ २ १
२३सो३। हाउहाउ। हो३वा। मम। द्रा२३४इभा
५ ५
इ। उहुवाहाउ। वा॥ ४॥

५ र र र १र
(आभीशवम्॥) परितोषिञ्चतासुतम्। ए। सो-
र १ ७ २ १ ५ २ १र र
मोयज३त्तामꣳहाविः। दा२३४धा। हाइ। न्वाꣳयो
र ७ १ २ ५ २ १ र २ १
नर्यो अप्सुअन्तारा। अ२३४पा। हाइ। वासोममो२-
५ ४
३४वा। द्रा५इभोहाइ॥ ५॥

५ र र र
(उत्तरमाभीशवम्॥) परीतोषिञ्चतासुतम्। ए।

Digitized by Google

१र र १ ७ २ ३ ५ २ २
ए। सोमोयऊ३त्तमꣳह्वाविः। दा२३४धा। हा३हाइ।
१र र र ७ २ ३ ५ २ १ १
न्वाꣳयोनर्योअप्सुअन्तारा। स्व२३४षा। हा३होइ। वा
र २ १ ५ ४ ५
सोममो२३४वा। द्रा५इभोई२होइ॥ ६॥

४ ५र ४र ५ र ४ १र
(माण्डवम्॥) परीतोषिञ्चतासुतम्। इहा। सो
र २ १ २ १ २ १र र र २
मोयउत्तमꣳहा२३वोः। इहा। दधन्वाꣳयोनर्योअप्सु
१ २ १ २ १र २ १ २ १
वन्ता२३रा। इहा। सुषावा२३सो। इहा। ममा२३।
१ ३ ५र र ३ ५
द्रा२इभा२३४औहोवा। ई२३४हा॥ ७॥

४ ५र ४र ५ र ४
(माण्डवमुत्तरम्॥) इहा। परीतोषिञ्चतासुतम्।
१र र २ १ २ १ १ २
इहा। सोमोयउत्तमꣳहा२३वोः। इहाउवा३। ऊ३-
५ २ १र र र २ १ २ १ १
४पा। दधन्वाꣳयोनर्योअप्सुवन्ता२३रा। इहाउवा३।
२ ५ २ १र २ १ २ २ ५
ऊ३४पा। सुषावा२३सो। इहाहाउवा३। ऊ३४पा।
२ १ २ १ २ २ ५
ममद्रा२३इभोः। इहाउवा३। ऊ३२३४पा॥ ८॥

४ ५र ४र ५ र ४ १र १र
(अभीवासः साम॥) परीतोषिञ्चतासुताम्। सोमो

यउ। नमᳫ्ह्वाइः। दाधाओ२३४वा। ऊ२३४पा।
न्वाᳫ्योनर्योअप्सु वन्ता२३रा। सुषावा२३सो। मामद्रि
भिः। इडा२३भा३४३। ओ२३४५इ। डा॥९॥

(परिवासः साम॥) परीतोषिञ्चतासुतम्। सोइवा।
सोमोरयउत्तमᳫ्हविः। दधान्वाᳫ्योइ। वा३हाइ। न-
र्योरप्सु वन्तरा। सुषावामो३। ह३हा। मामद्रिभिः।
इडा२३भा३४३। ओ२३४५इ। डा॥१०॥

(वैष्णवम्॥) परीतोषिञ्च। ताᳫ्सुतम्। सोमोर
यउत्तामा२१२म्। हावी२ः। दधन्वाᳫ्योनर्योअप्सु-
वा२१२। तारा२। सुषावा२३सो३। ममो२३४वा।
द्राᳫ्इभोइहाइ॥११॥

(सौमक्रतवीयम्॥) परीतोषा२इ। चतासुता२म्।
ऐहो२। ऐहो२। ऐहिहा२इ। उवा२इ। ई३या।

१र र १ १र १र
सामीयज२। नमꣳ्चवो२ः। ऐही२। ऐही२।
१र २ १ ऽ २ १ र र
ऐहिहा२इ। उवा२इ। ई३या। दधन्वाꣳयोनर्यो२।
१ १र १र १र १ १
पसुवन्तरा२। ऐही२। ऐही२। ऐहिहा२इ। उवा
ऽ २ १र १ १र
२इ। ई३या। सुषावसो२। ममद्रिभा२इ। ऐही
१र १र १ ऽ २
२। ऐही२। ऐहिहा२इ। उवा२इ। ई३या३४३।
१
ओ२३४५इ। डा॥ १२॥

२ २ ३ ५ २ १ ३ २ ३ ५ २ र
(गर्ह्य:॥) उपाउप। उपा३१। उपाउप। परी-
र १२र ३ ५ ३ २ ३ ५ ३ २ ३ २ ३ ५
तोषिञ्चतासुतम्। उपाउप। उपा३१। उपाउप।
२र र ३ २ ३ १ ३ २ ३ ५ ३ १ ३ २ ३ ५
सोमोयउत्तमꣳहविः। उपाउप। उपा३१। उपाउप।
१ र र ऽर २ १ २र ३२ ३ ५ ३ २ ३ २
दधन्वाꣳयोनर्यो३प्सुवन्तरा। उपाउप। उपा३१। उपा-
३ ५ २ र र ३ २ ३ २ ३ २ ३ ५ ३ २ ३ २
उप। सुषावसोममद्रिभिः। उपाउप। उपा३१। उपा
४ ३ ५
३ऊ५पा६५६। ऊ२३४पा॥ १३॥

५ऽ ऽ १र र १र
(प्रतोदः॥) हाउहाउहाउवा। परीतोषिञ्चतासु-
१ ३ १ १ १ १ ऽ ऽ ऽ १र र २
तम्। उपा२३४५। हाउहाउहाउवा। परीतोषिञ्च

२ १ २ ११११ ५ ५ ५
तासुतम्। इडा। उपार२३४५। हाउहाउहाउवा।
१२२ २२ १ २११ २११११ ५
परीतोषिञ्चतासुतम्। अवोबृहत्। उपार२३४५। हाउ-
५ ५ १२२ २२ १ २५२ १२
हाउहाउवा। परीतोषिञ्चतासुतम्। सोमोरयउत्त-
१ २१ १ १२ २ ५२ १ २१२ २ ११
मꣳहविः। दधन्वाꣳयोनर्यो२प्सुवन्तरा। सुषावसोर-
११६ ५ ५ ५ २ २१ २११११
३४५। हाउहाउहाउवा। ए३। ममद्रिभीर२३४५ः॥१४॥

२ १ ५ २ १
(महायौधाजयम्॥) हाओ२३४वा२। हा३ओ-
५ १ १२२ २२ १ २५२ ५१
२३४वा। हाउवा। परीतोषिञ्चतासुतम्। सोमो२य-
२१२१ १ १२ २ ५२ १ २१२ २
उत्तमꣳहविः। दधन्वाꣳयोनर्यो२प्सुवन्तरा। सुषाव-
२ २ २ ५ २ १ ५ २
सोममा। हाओ२३४वा।२। हा३ओ२३४वा। हाउवा३।
२ १ ११११
द्रा३इभीर२३४५ः॥ १५॥

हे ऋत्विजः। "सुतम्" अभिषुतं "सोम" "इतः" अस्मात् कर्मणम् "ऊर्ध्वम्" अथवा अस्मात् प्रदेशादूर्ध्वं "परिषिञ्चत" वसतीवरीभिः। ["इतोषिञ्चत" इत्यत्र संहितायां छान्दसं रोहत्वम्। आदेशप्रत्ययोरिति षत्वम्] "यः" सोमः देवानाम् "उत्तमं" प्रशस्तं "हविः" भवति। अपिच "नर्यः"

अथ तृतीया।

१ २ ३ १र २र ३ १र ३र ३ १ १ १
आसोमस्वानोअद्रिभिस्तिरोवाराण्यव्यया।

३ २ ३ २ ३क २र ३ २ ३ १ २ ३ १ २
जनोनपुरिचम्वोर्विशद्धरिःसदोवनेषुदध्रिषे ॥ ३ ॥ ४७*

३ ५ २ र ५र १ २
(आश्रम॥) आ२३४सो। मस्वानो३आ। द्रा२इभा

३ ५ १ १र र ५र १ १ २ १
ओ२३४वा। तिरोवारा२णिअव्यया२३। जानाओ२३४

५ १ २ १ ५ १ ५र ५र १
वा। नापाओ२३४वा। रिचमुवोवोरविंशद्धरी२३ः।

१ २ १ ५ १ २ १ ५ ४
सादाओ२३४वा। वानाओ२३४वा। षुदा५ध्रिषा६।

४
हो५इ। डा॥ १६॥

११र र र २ ३ ५
(सोमसाम॥) आवासोमस्वा। नोअद्रा२३४इभीः।

१ २ ५ १ १ २
तिरोवा२३४रा। णिया३१उवा२३। षा२३४या। जनो

मनुष्याय हितः "यः" च सोमः "अप्सु" वसतीवरीषु "अन्तर्" परिधे वाञ्छन् "दधन्वान्" गच्छन् भवति। तं सोमम् "अद्रिभिः" ग्रावभिः अध्वर्युः "सुषाव" अभिषुतं चकार तं परिषिञ्चतेति समन्वयः॥ २॥ ४६

* ऋ० ८, २, १०, १=म० ७, ५, १३, ५=अष्टो ४, १, ८।

३ ५ २ ३ ५ २
नार२३४पू। राइचामू२३४वो:। विश्वा३१उवार२३। चा-
५ २ १ ५ २
२३४रो:। सदोवार२३४ने। पुदा३१उवार२३। श्नोर२३४
५
षे ॥ १७ ॥

४र ५र र ४र ५ ४ २ १र र र २
आसोमस्वानोअद्रिभाइः। तिरोवाराण्यिआव्या१या
१ र २ १ २ २ र १
२। जनोनपुरिचामू१वो२ः। विश्वाद्वा१रीरिः। सदोव-
१ २ २ १
नाइ। षूरदध्रिषोर२३४५इ। डा ॥ १८ ॥

३र ४र र ३र ४ ५ र २ ४र ५ ४ ५
आसोमस्वानोअद्रिभिः। तिरोवा३राण्यिअव्यया।
१ र र २ १ १ ६ २
जनोनपुरिचमुवोर्विश्वद्धरिः। औ२। ऊवाइ। हो३वा।
१ र र १ ६ २ १ २
सदोवनेषुदौ२। ऊवाइ। हो३वा। ध्रिषा। औ-
४ ५ ४
३होवा। होपुइ। डा ॥ १९ ॥

हे "सोम!" "अद्रिभिः" ग्रावभिः "स्वानः" अभिषूयमाणस्त्वम् "अव्यया"* अविमयानि "वाराणि" वालानि पवित्राणि "तिरस्" कुर्वन् व्यवधायकानि कुर्वाणः सन् "आ पवस्व" आभिमुख्येन क्षरसि। "हरिः" हरितवर्णः स सोमः चम्वो-

---

* ड्याडियेति कात्यायनवचनात् सिद्धम् (७,१,३९सू०)।

अथ चतुर्थी।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

प्रसोमदेववीतयेसिन्धुर्नपिप्येअर्णसा।

३ १२ २१ ३ १२ २१ २ ३ १ २ ३ १ २

अᳫंशोःपयसामदिरोनजागृविरच्छाकोशंमधुश्चुतं॥४॥४८*

५ र २ १ ५

(त्रीणिधनमाग्नेयम्॥) प्रसोमदा। वावोता२३४याइ।

२ १ २ ५ २

सिन्धूर्नापाइप्यआ३१उवा२३। णा२३४सा। आᳫंशोः-

३ ५ २र १ र २ ५

पा२३४या। सामदाइरोनजा३१उवा२३। गृ२३४वीः।

२ २ ५ २ ५

आच्छाको२३४शाम्। मधा३१उवा२३। श्च२३४ताम्॥२०॥

२३४५ र ४५र २

(अग्नेर्वैश्वानरस्य साम॥) प्रसोमदेववी। तयो२३४-

५ २ ४ २ ४ ५र २ ५ १ १ २

वाइ। सिन्धुर्नपिप्येश्व। णसो२३४वाइ। आᳫंशाश्चोर-

रधिषवणफलकयोरुपरि स्थिते कलशे† "विशत्" प्रविशति। तत्र दृष्टान्तः—"जनोन" यथा जनः "पुरि" पुरे प्रविशति। स त्वं वनेषु काष्ठनिर्मितेषु पात्रेषु‡ "सदः" स्थानं "दधिषे" "दधिषे"-इति, साम्न ऋचः पाठो॥ ३ ॥ ४७

---

* छ० १, २, २०, १=ऋ० ७, ५, १४, २=आर० २, २, १५—१६=ऊहे १, २, १३;—६, २, १३;—८, १, ११;—९, २, १७—१८;—११, १, १७;—१४, १, १५;—१८, १, १२—१३—१४;—१९, २, १७;—२२, २, ६=ऊह्ये ६, १, ५।

† 'कलशमध्ये'-इति वि०।

‡ 'वनेषु उदकेषु' इति वि०।

३४वा । पायाओ२३४वा । सामदिरानजा । गृ२३। वोईर्वाइ । आकाओ२३४वा । कोशाओ२३४वा । मधूपुस्व-ताम् । होपुइ । डा ॥ २१ ॥

( द्विस्विह्नारं वामदेव्यम् ॥ ) प्रसोमा२३देववीतयाइ । साइन्धुर्नपिप्येअर्णसा१ओ:पयसामदिरोनजौवाइ । ऊ-म्मा२ गृ२३वो: । अक्काकोशाम्मधौवो३ । ऊम्मा२ । श्चुताम् । औ२३होवा । होपुइ । डा ॥ २२ ॥

( उत्सेधः ॥ ) प्रसोमदेववीतये । सिन्धु: । नपा३४-औहोवा । प्येअर्णसा२ । वा३१उवा२३ । ऊ३४पा । य१ओ३:पया । औहोवावाइ । सामदिरो । नजागृविः । वा३१उवा२३ । ऊ३४पा । अक्का३कोशम् । औहोवा-वाइ । मधूश्चुताई५६म् । ऊ२३४५ ॥ २३ ॥

( निषेधः ॥ ) प्रसोमदाइवाईवीतयाइ । सिन्धूर्नपा-

अथ पञ्चमी।

१ २ १ २ ३ २ ३१ २ ३ २ ३ १ २
सोमउष्वाणःसोतृभिरधिष्णुभिरवीनाम्।

२र १ १ २ १ २ ४ ५ २
इ। प्यें अर्णसा २। इहा३। आ ऽ ओ ३:पाया। धा-

२ ५ १ २ १ २र १ २ १ २
धो२३४वा। सामदिरो। नजागृ२३वीः। इहा३।

१ २ ४ ५ २ २ ५ २ २ ४
आच्छा३कोशाम्। धाधो२३४वा। मधूश्चूताइ५-

२ १ १ १ १
ईम्। धो२३४५॥ २४॥

हे "सोम!" त्वं "देववीतये" देवानां पानाय* तदर्थम् "अर्णसा" वसतीवर्याख्येनोदकेन "प्रपिप्ये" प्राप्यायसे। तत्र दृष्टान्तः—"सिन्धुः न" यथा सिन्धुरुदकेन प्रप्यायते तद्वत्† [प्यायतेः लिटि लिटाङ्कोरिति पीभावः] ततः स त्वं "मदिरः" मदकरः सुरादिरिव "जागृविः" जागरणशीलः‡ [यद्वा न सम्प्रत्यर्थे, इदानीं मदकरो जागरणशीलस्त्वं "अंशोः" लताखण्डस्य "पयसा" रसेन "मधुश्चुतं" मधुररसस्य धारयितारं "कोशं" द्रोणकलशं "अच्छ" अभि¶ गच्छसि॥ ४॥ ४८

---

* 'देववीतये देवतर्पणाय'-इति वि०।

† 'प्रपीप्ये प्रवर्द्धते पूर्यते वा'-इति वि०।

‡ 'जागृविः जागरणशीलः अप्रमत्तः'-इति वि०।

¶ 'अच्छ आप्नुम्'-इति वि०।

१ २　२ १ २　२ १ २　२ १ २　२ १ २
अश्वये*नच्छरितायातिधारयामन्द्रयायातिधारया ॥५॥४९†

४　५　१ २　१
(सोमसामानिषट् ॥) हाउसोमाः । उषाणा२ सो
२　१　२ १　२ १ ३ २　२　१　३　२　१ २
ह्, १भो२ । आधिष्णुभिरवो२नाम् आश्वौ३हो । येवच्छरि-
२ २　२　१　२　२　५ २ ३ ५
तायाताइधा१राया२ । मन्द्रावा३या३४ । हाश्नोवा ।
२ १ २　३ १ १ १ १
तिधारया१२४५ ॥ २५ ॥

५ २　२ ४ २ ५　४ २　५　१　२　२ २
सोमऊ३षाणःसोहभाइः । आधिष्णुभिरवोनाम् ।
१ २　५　२ १ २ २　२　२　२　२
आश्वये२३४वा । च्छरितायातिधा१रा३या । मन्द्राया
५　२　५　२ १　२　४ ५　४
२३४या । ता२३४इधा । रया । औ३होवा । हा५इ ।
डा ॥ २६ ॥

४ २ ५　२　४ ५ २ ४ ५　४　४　१ २
सोमउष्वाणःसोहभिः । ए५ । अधी । ष्णुभिरा३१-
५　१　२　१ २　२ २ २
उवा२३ । वो२३४नाम् । आ२३श्वा । येवच्छरितायातिधा-
५　१ ० २　१ २ २
३१उवा२३ । रा२३४या । मा२३द्रा । यायातिधा३१उवा-
५
२३ । रा२३४या ॥ २७ ॥

---

* 'अश्वया इव = अश्वया यथा शीघ्रं गच्छति, तद्वत् शीघ्रगामिन्या'-इति वि० ।

† उ० १, २, ११, १=ऋ० ७, ५, १२, ३=ऊहे १, १, ५ —६—७—८ ;— २०, १, १९—२० ;—२०, २, १—ऊह्ये ६, १, १—२—१० ;—६, २, ६ ।

४र ५ र ४५र ५ ५ ४ ४ १ २ १ ५र १
सामउष्वाणःसोहभिः। एपु। अधौ। ष्णुभिरवोर। नाम्।
१र १ ० १ र १र १ २
आस्वयेव। हारितायारे। ताइधारया। मान्द्रयायौवा।
२ ५ २१ २ ४ ५ ४
तीर२३४धा। रया। औ३होवा। हो५इ। डा॥ २८॥

४र ५ र ४ ५र ४ ५ ४ ५ ४५र
सोमउष्वाणःसोह। भाइ। अधिष्णुभिरवी। नाम्।
१ २ १ २ १ ५र १ र २ १ र र
आधिष्णुभिरवोर। नाम्। अश्वयेवा। हरितायाता
२ ५ २ २
२३इधा। रया३१उवा२३। मा२३४०द्रा। यायाती
५ २२ १र ४ ५ ४
२३४धा। रयाऔहोवा। हो५इ। डा॥ २९॥

१र ४ र ३ ४र ५ ५ २ १
सोमउष्वाणःसोहभिः। औ३होइ। आ२३४।
५ ४ ५र १ १र र र १ २
धिष्णुभिरवीनाम्। आश्वयेवहरिताया। तिधारायौ।
३ ५ २ १ र २ १ ५
वाओर३४वा। मन्द्रयायातो३धा। ऊ३म्। ऊ२३४३म्।
२ ५
रा३४५योइहाइ॥ ३०॥ ४९

॥ इति ग्रामे गेये चतुर्थः प्रपाठकः॥

"सोहभिः" सुषुद्भिः "स्वानः" सुवानोऽभिषूयमाणः "सोमः" "अवीनां स्नुभिः" [मांसूत्स्नानामुपसंख्यानमिति वार्त्तिकेन सानुशब्दस्य स्नुभावः] समुच्छ्रितैर्वालैः पवित्रैरधियाति अधि

अथ षष्ठी ।

३ १ २ ३ १ २ ३ १ २
तवाह॒ꣳसोमरारण*सख्यइन्दो दिविदिवे ।
३ १ २ ३ १ २ ३ १२ ३२ ३ २उ ३ १ २
पुरूणि†बभ्रोनिचरन्तिमामवपरिधीꣳरतिताꣳइहि ॥२॥५॰‡

५ २ २ १
( वैष्णवम् ॥ ) ओं ॥ तवाहꣳसो । मरा २रणा ।
२ १ २ २ २
रण । सख्यइन्दोदिवा २इ । दिवाइ । दिवे । पुरूणिबभ्रो-
१ २ १
निचरन्तिमा २मवा । अव । परिधीꣳरतिताꣳ २इहा २३इ ।
१ ३ ५२ २ २ ५
आ२इ । हा२३४ । औहोवा । ऊ२३४पा ॥ १ ॥
४ ५२ ४ २ १ २
( द्वितीयंवैष्णवम् ॥ ) तवा । तवा । अहꣳसोम-

अधिकं गच्छन्ति । "उ" इति प्रसिद्धौ । "अव्ययेव" वभ्रवयेव हरितवर्णया धारया याति । "मन्द्रया¶" मदकारिण्या धारया द्रोणकलशमधि गच्छति ॥ "उष्वाणः" "उषुवाणः"—इति पाठौ ॥ ५ ॥ ४९

---

* 'रारण रमयाथि । अथवा रणतिस्तुतिकर्मा मम स्तुतिं कुर्मः'-इति वि० ।
† 'पुरूणि बहूनि दुःखानि । अथवा बहूनि यजमानकुलानि चरन्ति'-इति वि० ।
‡ उ० ३, १, ११, १ = ऋ० ७, ५, १५, ४ = ऊहे २, १, ९ — १० — ११ ;—९, १, १० ;—१३, २, १—२ ;— १६, २, १५-१६—१७ — १८ ;—१९, २, १ ;—२०, १, १४—१५—१६ = ऊह्ये २, १, १३ ;—२, १, ४ ;—५, २, १२ ;—६, १, ११—१६ ।
¶ 'मन्द्रया मदनलया'-इति वि० ।

२ १ २ १ २ २ १
रारण। सख्याई३०दो। दिवाश्रौ३षो। दाइवे२।
१२ २ २ २ १ १ २ १ १
पुरूणिबभ्रो।निचरन्तिमा१मा३वा। पराश्रौ३षो। धाइ९-
२ १ ५ ४ ५
रतिमोर२३४वा। श्रा५इ३षोई६चाइ॥ २॥

५र २ २ ५र
(आङ्गिरसानित्रीणि॥) तवाह९सोमा६रारण।
२ २ ५ २ २ ५ ४२र म २ ३ ४
साख्याई२३४०दो। दिवेदा२३४इवे। पुरूणिबभ्रो।नच-
५ २ १ ५ ४ ५ ४ ५ २१
रन्तिमाम्। श्रावा२३४चाइ। पारीधाइ९रा। तिता
५ ४ ५
२३४वा। श्रा५इ३षो६चाइ॥ ३॥

४५र४ ५र २ ४ ४ १ २ १
तवाह९सोमरी। छो५रणा। साख्यइन्दोर२।
२ २ २ ५ १ १ १र
दिवा४४५इ। दी२३४वे। पूरू२णाइवा२। भ्रोनिच-
२ २ २ ५ १ १
रार२। तिमा३४५म्। श्रा२३४वा। पारी२धाइ९
२ २ २ ५
रार२। तिता९३४५। ई२३४षो॥ ४॥

२४र२ ४र ५र २२र ४ र ५ २ १
तवाह९सोमरारण। सख्यइन्दो।दिवेदिवाइ। सख्य
र २१र २ १र र २ १र २
इन्दो।दिवेदा२३इवे। पुरूणिबभ्रो।निचरन्तिमामा२३वा।

अथ सप्तमी।

१ २ २ ३ १र १र
मृज्यमानः सुहस्त्या * समुद्रे वाचमिन्वसि।
३ २ ३ १ २ ३ १ २ ३ १ ३ १ २ ३ क २र
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि॥ ७ ॥५१†

१ २ १ २ १
पराइधार२३इ७रा। तिता७र२३इषा२३४३इ॥ ओ२३४५इ। डा॥ ५॥

५ र २
(स्वारमौक्षणोरन्ध्रम्॥) मृज्यमानाः। सुहस्ति-

हे "इन्दो" सोम! तव "सख्ये" सखिकर्मणि अहं "दिवे दिवे" अन्वहं "रारण" रमे [रणेर्लिटि उत्तमे णलि रूपम् हे] "बभ्रो" बभ्रुवर्ण! सोम "पुरूणि" बहूनि रक्षांसि "मां" तव सख्ये स्थितं "न्यवचरन्ति" नीचीनं चरन्ति बाधन्ते। ये मां बाधन्ते तान् "परिधीन्" ‡ रक्षसान् त्वम् "अतीहि" आगच्छ॥ ६॥ ५०

* "सुहस्त्य"-इति ऋ० सं०।

† उ० ४, १, १२, १ = ऋ० ७, ५, १६, १ = आर० ५, १, १२ = ऊह्य १, २, १—२—३—४—५;—८, १, ४—६;—२०, २, ७—८;—ऊह्य ६, १, १९।

‡ 'परिधीन् अतीहि-ये अन्ये यजमानाः परिचरन्ति, तेभ्यः परिधीन् रक्षकान् अतीत्य इहि मदीयं यज्ञमागाहि। अथवा दुःखानि ये कुर्वन्ति अतीत्य तेषां परिधीन् आयाहि'-इति वि०।

१ २ ४ ५ २ १ १ ४
या३। साम्३द्राइवा। चमिन्वसा३इ। रायो३०पाइ-
५ २ १ ३ ५ १ २र
श्रा। गम्बङ्कला३म्। पूरुस्पृ२३४हाम्। पवमा।
१ २ १ १ ५ ४ ५
ना। श्रौ३हो। भिये२३४वा। षा५सोई६डाइ॥ ६॥

५ र २ १
(पौष्कलारम्भम्॥) मृज्यमानाः। सुहस्ताया२।
१ २र र १ ० २२ २२ १
समुद्रेवा। चामिन्वासा२३४इ। रया३४इंपिशा। गम्ब
० १ १ ३ ५र र
ङ्कलंपूरुस्पृहा२म्। पवा२३। मा२ना२३४औहोवा।
१ ५र २ १११
भिया२र्षसी२३४५॥ ७॥

५ र २ १ २ १
मृज्यमानाः। सुह। स्तिया। सा१मू२द्राइवा२।
१ २ १ १ २ १ २
चमि। न्वसाइ। रा१यी२०पाइशा२। गंवङ्कलंपुरु।
१ २ १ १ २ ५र र
स्पृहाम्। पा१वा२माना२३। भा२या२३४औहोवा।
५
षा२३४सी॥ ८॥

५ ५ १र
(आग्नेयानित्रीणि॥) मृज्याई६ए। मानःसुहस्तिया
२ २ १र र २ २ १
यौ३हो। समुद्रेवाचमिन्वसायौ३हो। रयिंपिशङ्ग बङ्क

२ १ १ २ ११ ५
लंपुरुस्पृहाम्मौ३हो । पवमार२३ना३ । भियोर२३४वा ।
४ ५ ५
षा५ुसो१६हाइ ॥ ८ ॥

५ ४ ५र ४ ५ ११
मृज्यमानः सुहस्तेया । वाहाइ । समद्राइवा ।
० २ ५ ३१ ३१ १ १ १०
चमोरन्वार२३४सी । रया३४इंपिशा । गंबक्तलम् । पुरु-
११ १र१ २१ ५ ४
स्पृहा२३४म् । पवा३४माना३ । भियोर२३४वा । षा
५
५ुसो१इहाइ ॥ १० ॥

४ र ४ १ १ १
मृज्यमाना५ः सुहस्तिया । समू२द्राइवा२ । चमा-
१ १ २ १ १
२इंन्वासी२ । रयिंपिशङ्ग्बक्तलंपुरुस्पृहाम्मौ३हो । पव
२ २१ ५ ४ ५
मार३मा३ । भियोर२३४वा । षा५ुसो१६हाइ ॥ ११ ॥

५ ४ ५र र
( ऐडमौक्षणोरन्ध्रम् ॥ ) मृज्यमानःसुहस्त्या । समु-
र४ ५ १ २ १० २ २ २
द्रेवोवा । चामिन्वसि । रायिंपिशा३ । हा३हा ।
१ ११ २१२ १र१ १ १ १
गंबक्तलंपुरुस्पृहम् । पवमाना३ । हा३हा । भियर्षा
२ १
२३सा२४३इ । ओ२३४५इ । डा ॥ १२ ॥

अथाष्टमी।

३ १र २र ३ १ ३ १२ ३ १ ३ १ २
अभिसोमासआयवःपवन्तेमद्यम्मदम्।

५ ४ ५र ४ १
(वाजजित्॥) मृज्यमानःसुहा। स्तिया२।

१ १ र १ २र १
सम्२हो। द्रेवा२हो। चामिन्वमाइ। रया२यिंऌ

१ १ २१ १र१
षोइ। पिशा२हो। गंबऊलाम्। पूरुस्पृहाम्।

१ र १ १र १ १ २र
पवा२हो। माना२हो। भौयर्षसा३१उवा२३। वा

१र २ २
जीजिगी३वाऌ१॥ १३॥

हे "सुहस्त्या" हस्ते भवा. हस्त्याः अङ्गुलयः,* शोभनाङ्गुलिक सोम! "मृज्यमानः" शोध्यमानस्त्वं "समुद्रे" अन्तरिक्षे† कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि‡। किञ्च। हे पवमान पूयमान सोम! "पिशङ्गं" हिरण्यं रजतादिभिः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिंधनं" "अभ्यर्षसि" स्तोतृणामभिगच्छसि प्रयच्छसीत्यर्थः॥ ७॥ ५१

* "सुपांसु (७, १, ३९)"-इत्यादिना सुप आले रूपम्।

† "समुद्रः"-इति अन्तरिक्षनामसु पञ्चदशं नैघण्टुकम् (१, ३)।

‡ "इन्वति"-इति गतिकर्मसु पञ्चदशाधिकशततमं नैघण्टुकम् (२, १४)। व्याप्तिकर्मसु च प्रथमम् (२, १८)। अतएव 'इन्वसि व्याप्नोषि'-इति वि०।

२ १र २र३१२ २ १ २
समुद्रस्याधिविष्टपेमनीषिणो
३ १ २ ३ १ २
मत्सरासोमदश्चुतः ॥८॥ ५२*

२ १ २र २र १ २
( वैश्वदेवेद्वे )। हाउहाइ। अभिसोमासआयवा-
२ २ ३र १ २
१वा२३: । हाउहाइ। पवन्तेमद्या२यांमा१दा२३म्। ।
१ २ ३र ३र १ २
हाउहाइ । समुद्रस्याधिविष्टपेमा३नाइषा१इणा२३: ।
२ २र २र १ २ २ २
हाउहाइ। मत्सरासोमा३दाश्चू१ता२३:। हाउहा-
१
३४३इ। वो२३४५इ। डा ॥ १४ ॥

४ ५ ४ ५ २ ५ ४ ५
आभीसोमा। सआ३१उवा२३। या२३४वाः। पाव
४ ५ २ ५ ४ ५ ४
न्ताइमा। दिया३१उवा२३। मा२३४दाम्। सामुद्र-
५ २ १ २ २ ५ ४ ५
स्या। धिविष्टापेमना३१उवाये३। षो२३४णाः। मात्सा
४ ५ २ ५
रासाः। मदा३१उवा२३। श्चू२३४ताः ॥ १५ ॥

---

* उ० २, १, ८, १ = ऋ० ७, ५, १४, ४ = आर्चे २, १, १४ — १५ ;—४, २, ७—८—९—१०—११—१२ ;—७, १, १२ ;—७, २, १४—१५—१६ ;—८, १, १६ ;—८, २, १८ ;—९, २, १५ ;—९, २, ६ ;—१२, १, ३ ;—१२, २, १६ ;—१४, १, ९ ;—१४, २, ५—७ ; = १६, २, २—३ ;—१८, २, २—३—१० ;—२२, २, १० = ऊह्ये १, १, ६ ;—१, २, ११ ; —२, २, ९ ;—४, १, १० ;—४, २, १० ;—६, १, ९—१४ ।

२ १ २ ४र ५र १ २र
(इन्द्रसामनोद्दे।) अभिसो३मासआयवाः। पवन्ते
१ २१ ३ २ १ २ २ १
मदियम्। दा। औ३हो। आऔ३हो। समुद्र-
२ १ १र२र १ २ २ १ २ २
स्याधिविष्टपेमनीषि। णा। औ३हो। आऔ३हो।
१र२ २ १ २ २ १ २ २
मत्सरासोमदच्यु। ता। औ३हो। आऔ३हो३४-
१
३। ओ२३४५इ। डा॥ १६॥

५ ४र ५र र ४ ४ १ र
अभिसोमासआ। हो५यवाः। पवन्तेमद्यम्मदम्-
र २१ २ १र
वन्तेम। दियाॅहोइ। मा२३दाम्। समुद्रस्याधिविष्ट-
र र २१ २ १र र
पेमनीषिणाः। मनाहोइ। षा२३इणाः। मत्सरासोमद
२१ २ १
च्युताः। मदाहोइ। च्यू२३ता२३४३ः। ओ२३४५इ। डा।
॥१७॥

१ २र २ ३र ४ र
(स्वः पृष्ठम्॥) अभार२इसोमा३४। औहो५सआ-
४ १ २र २ २र ४ ४ १
यवाः। पवा२ं०तेमा३४। औहो५दियम्मदाम्। समू-
२ २ २र ४ ४ १ २ १ २
२द्रस्या३४। औहो५धिविष्टपाइ। ओये३। मा२ना२३४-

औहोवा। घी२३४णाः। ऊ२३४पा। २। मत्सरासोर३।
मा२दा२३४औहोवा च्यू२३४ताः॥ १८॥

(इन्द्रसामानि त्रीणि॥) औहोवा। अभिसोमास-
आयवः। औहोवा। पवा२। तेमा३ओ५वा६५६। दि-
यम्मदम्। समू२। द्रस्या३ओ५वा६५६। धिविष्टपे२मनी-
षिणा२ः। औ३हो३१इ। मत्सा२। रासा३ओ५वा६५६।
मदच्युता२३४५ः॥ १९॥

अभिसोमासआया६वाः। पवा२। तेमा३ओ५वा-
६५६। दियम्मदम्। समू२। द्रस्या३ओ५वा६५६। धिवि-
ष्टपे२मनीषिणा२ः। मत्सा२। रासा३ओ५वा६५६। मद-
च्युता२३४५ः॥ २०॥

अभिसोमासआया६वाः। पवन्तादूमा। दिया२मा-

अथ नवमी ।

३   १ २ ३ १ २ ३ २ ३ २ ३   १ २ ३ २
पुनानः सोम जागृविरव्या वारैः* परि प्रियः ।
१र   २र         ३ १
त्वं विप्रो अभवोऽङ्गिरस्तम
२ ३ १ २
मध्वा यज्ञं मिमिक्ष णः‡ ॥ ९ ॥ ५३¶

५   २   २ १   २ १   २ ४ ५
२३४दाम् । समुद्रस्या । धिविष्टपाइ । मनाइषाइणः ।
१   १ २र १   १   २   ५र र   २   ५
मात्सरासोर२३ । मार्दा२३४यौहोवा । च्यूर२३४ताः ॥ २१ ॥ ५२

"आयवः"§ गमनशीलाः "सोमासः" सोमाः मद्यं" मदकरं मदं आत्मीयं रसं "अभिपवन्त:" अभितो निर्गमयन्ति । कुत्रेत्युच्यते—"समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रितपवित्रे । यद्वा । समुद्रस्य यस्मात्समुद्रवन्ति रसाः तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने "पवित्रे" निर्गमयन्ति । कीदृशाः ? "मनीषिणः" मनसईशितारः "मत्सरासः" मदकराः "मदच्युतः" मदकरेण रसेन च्यावयितारः ॥

"विष्टपे", "विष्टपि"—"मदच्युतः", "स्वर्विदः"—इति च पाठौ ॥ ८ ॥ ५२

---

* "अव्योवारे"-इति
† "वोङ्गिरस्तमो"-इति, } ऋ० ।
‡ "मिचनः"-इति च

¶ ऋ० ७, ५, १३, १ ।

§ 'आयवः मनुष्याः'-इति वि० । 'आयवः'-इति मनुष्यनामसु पठितं नैघण्टुकम् ( २, ३ ) ।

अथ दशमी ।

१　२　　२ १ २ १ २ १ १ २ २ १
इन्द्रायपवतेमदःसोमोमरुत्वतेसुतः ।

५ र ४ ५र ४र ५ ४　　१२र
(सोमसाम ॥) पुनानःसोमजागृविरव्याः । वारैःपा-
० १ र र　　२ १
रिप्रिया २ः । त्वंविप्रोअभवोऽङ्गिराइरा२३४ । स्तमा२ ।
१ २र १　१ २ ५र र　२ ५
माध्वायज्ञा२३म् । मार्२इमार३४औहोवा । त्वा२३४याः ।
॥ २२ ॥ ५३

हे सोम! "जागृविः" जागरणशीलः "प्रियः" प्रीणयिता* त्वं "पुनानः" पूयमानः सन् "अव्याः" मेषाः "वारैः" वालैर्निर्मिते दशापवित्रे परिक्षरसि । "अङ्गिरस्तम" हे अङ्गिरसां वरिष्ठ! "विप्रः" मेधावी त्वं पितॄणां नेता "अभवः"† भवसि । स त्वं "नः" अस्मदीयं "यज्ञं" "मध्वा"‡ मधुना आत्मीयेन रसेन "मिमिक्ष"§ सेक्तुमिच्छसि । मिहेः सेचनार्थस्य (भ्वा०प०) सनि रूपम् ॥ ८ ॥ ५४

---

* 'प्रियः प्रियतरः, भूतानां प्रियः'-इति वि० ।

† 'सार्वकालिको लङ् (३, ४, ६) ।

‡ सुप आले रूपम् (७, १, ३९) ।

§ 'मिमिक्ष सिञ्च' इति वि० ।

३ १ २ ३ १२ ३२ ३
सहस्रधारोऽअत्यव्यमर्षति
१२ ३ १२
तमीम्मृजन्त्यायवः ॥ १० ॥५४*

५ र २ १ १र र
इन्द्रायपा। वता२इमादा२ः। सोमोमरुत्वता२इ-
१ १ २र १ १
न्द्रता२ः। स। हास्रधारः। अतिअव्यमा२र्षाती२।
१ १ २ १
तमा२इमार्जा२। तिश्रायार३वा३४३ः। ओ२३४५इ।
डा ॥ २३ ॥

५ र २र१
(स्वःपृष्ठमाङ्गिरसम् ॥) इन्द्रायपा। वतेमदाः।
२र र १ १ १ १ २र
सोमोमारु२। त्वतेन्द्रो२इ। न्द्रता२ः। स। हास्रधारः।
१ २ ३ ५ ३ ५ १
अतिअव्यमा। र्षाताओ२३४वा। ऊ२३४पा। तमीन्द्रो-
१ १र २ १
२इ। मार्जा२। तिश्राया२३वा३४३ः। ओ२३४५इ।
डा ॥ २४ ॥

५ र २ ४ ५४ ५ १र र
(सोमसाम ॥) इन्द्राया३पावताइमदाः। सोमोम-
२ २ १ २र १ २
रुत्वता१इन्द्र३ताः। स। हास्रधारः। अतिअव्यमा३।

---

* ऋ० ७, ५, १५, २।

अथैकादशी ।

१२　२१ २३ १र २र ३ १ २
पवस्ववाजसातमोभिविश्वानिवार्य्या ।
१ २३१ २३१र २र
त्वꣳसमुद्रःप्रथमविधर्म
३१२　३२
न्देवेभ्यःसोममत्सरः ॥ ११ ॥५५ *

४ ५　२१ २ २　४ ५　१ २　५र र
षाती । तमाओ३वो३इ । माजा । तारया२३४ओवो
३ ५
वा । या२३४वाः ॥ २५ ॥

४५ र ४र　२　५　२१ २र
पवस्ववाजसा । इषा । तार३४माः । अभिविश्वा-
१ २र १ ३ ५र र　११ १र २
निवारिया । त्वꣳसा२मू२३४ओवोवा । द्रःप्रथमेविधर्म-
२ २　१ ३ ५र र　२ ३
न् । दाइवाये३ । भ्या२ःसो२३४ओवोवा । ममत्स-
२
रा१ः ॥ २६ ॥ ५४

“मदः” मदकरः “सुतः” अभिषुतः “सोमः” “मरुत्वते” मरुद्भिस्तद्वते “इन्द्राय” इन्द्रार्थं “पवते” क्षरति । ततः “सहस्रधारः” बहुधारोपेतः सोमः “अव्यम्” अविमयं पवित्रम् “अत्यर्षति” अतिगच्छति तमिमं “आयवः” मनुष्या ऋत्विजः “मृजन्ति” शोधयन्ति ॥ १० ॥ ५४

---

* ऋ० ७,४,१६,२ ।

अथ द्वादशी ।

१ २ २ २३२ ३ १ २
पवमानाअसृक्षतपवित्रमतिधारया ।
२ १ २ १ १ २ ३ १२ १ २
मरुत्वन्तोमत्सराइन्द्रियाहया
३ २ ३ १ २
मेधामभिप्रयाꣳसिच ॥१२॥५६ *

॥ इति तृतीय-दशति ॥

४ ५ २ २ ४ १ २
(पवित्रम् ॥) पवमानाअसृक्षतपवा३इ । त्रामतिधार

हे "सोम !" "विश्वानि" सर्वाणि "वार्या" वरणीयानि स्तोतॄणि† "अभि" लक्ष्य "वाजसातमः" अतिशयेनान्नस्य सम्भक्तस्त्वं "पवस्व" क्षर । हे सोम ! "देवेभ्यः" देवानां‡ "मत्सरः" मदकरः "समुद्रः" समुन्दनशीलः¶ "विधर्मन्" विशेषेण पोषक !‖ त्वं "प्रथमे" मुख्ये श्रेष्ठे यज्ञे देवेभ्यस्तदर्थं क्षर ॥

"विधर्मन्"-"विधारयम्"-इति, "वाजसातये"-"वाजसातमः"-इति, "वार्य्या"-"काव्या"-इति च क्रमेण ताण्ड्यकल्पः पाठः ॥ ११ ॥ ५५

---

* ऋ० ७, ५, १६, ५ ।

† 'वार्या वरणीयेन उदकेन' इति वि० ।

‡ "षष्ठ्यर्थे चतुर्थीति वाच्यम्"—इति का० (पा० २, ३, ६२) ॥

¶ "समुन्दतीतिवा" इत्यादि निरुक्तोक्तेः (२, १०) । 'समुद्रः समुद्रसंस्थानीयः' इति वि० ।

‖ "विधर्मन्=विधर्मणि, विविधकर्मणि कर्मकारणे देवे' इति वि० ।

१　　२　　२　१　२　　　१　　　२

यामरुत्वन्तोमत्सराइन्द्रीऽ३याः। हयाः। मा२३इधाम्।

१　२　　१　२　　५२ २　　　२　५

अभायेऽ३। प्रा२या२३४औहोवा। सी२३४षा॥२७॥ ५६

"पवमानाः" पूयमानाः सोमाः "धारया" आत्मीयया "पवित्रम्"* "अति" अतीत्य "असृक्षत" सृज्यन्ते। कीदृशाः? "मरुत्वन्तः" मरुद्भिर्युक्ताः "मत्सराः" मदकराः "इन्द्रियाः" इन्द्रसृष्टाः। "मेधाम्"† स्तुतिं "प्रियांसि" अन्नानि च "अभि" लक्ष्य स्तोतृभ्य उभयं कर्त्तुं वा "हयाः" यद्वा मन्तारः सृज्यन्ते॥ १२॥ ५६

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे
छन्दोव्याख्याने पञ्चमस्याध्यायस्य पञ्चमखण्डः॥ ५॥
॥ इति षाष्ठंतम्॥

* "पवित्रं पुनातेः। मन्त्राः पवित्रमुच्यते। 'येन देवाः पवित्रेणात्मानं पुनते सदा' इत्यपि निगमो भवति॥ रश्मयः पवित्रमुच्यन्ते। 'गभस्तिपूतो नृभिरद्रिभिः सुतः' इत्यपि निगमो भवति॥ आपः पवित्रमुच्यते। 'शतपवित्राः स्वधया मदन्तीः' बहूदकाः॥ अग्निः पवित्रमुच्यते। वायुः पवित्रमुच्यते। सोमः पवित्रमुच्यते। सूर्यः पवित्रमुच्यते। इन्द्रः पवित्रमुच्यते। 'अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु' इत्यपि निगमो भवति" इति (नि० ५, ६)।

† 'मेधां प्रज्ञाम्'-इति वि०।

अथ षष्ठखण्डे—

सैषा प्रथमा।

१र २र३१२३२ ३ १२ ३१ १ ३ २ ३१र १र
प्रतुद्रवपरिकोशंनिषीदनृभिःपुनानोअभिवाजमर्ष।
३ १२ ३ १२३२३१ ३ २
अश्वंनत्वावाजिनंमर्जयन्तोच्छा
१ २३१ ३
बर्हीरशनाभिर्न्नयन्ति॥१॥५७*

२ ३५ ३ २ २ १
(अथनम्॥) ओइप्रतु। इहा३१। द्रवा। परि
२ २३४५ २ ३५ ३२ २ १
को३। अग्निषीदा। औइनृभिः। इहा३१। पुना।
२ १ २ २४५ २ ३४ ३२ २ १
नो३अभि। वाजमर्षा। आअश्वम्। इहा३१। नत्वा।
२ १ १२ ४५ २ ३ ५ ३२ २१
वा३जिनम्। मर्जयन्ताः। औअच्छ। इहा३१। बर्हीइः।
१ र २ २ ४
रशना। भा३४३इः। ना३या५न्ताई५ईइ॥२८॥

४५ ४ ५ २१ २ १
(वृषोअनं साम॥) प्रतु। एप्रत्व्। द्रवा। द्रवा।
२ २ ३४५ ४ ५ ४ ५ २१
परिको३। अग्निषीदा। नृभिः। एनृभिः। पुना।
२१ २ १ २ ३४५ ४५ ४ ५
पुना। नो३अभि। वाजमर्षा। अश्वम्। एअश्वाम्।
२१ २१ २ १ १२४५ ४५ ४ ५
नत्वा। नत्वा। वा३जिनम्। मर्जयता:। अच्छ। एअच्छा।

---

* उ० १, १, १०, १ = ऋ० ७, २, २२, १ = कपे १, १, ४ — १९, १, ७।

२ १ २ १ २ १ २ २ २ ५ ५
बर्हाइः। बर्हाइः। रश्मनाभिः। नये३४। धियाईहा-
२ १ १ १ १
उवा। तार२३४५इ॥ २९॥

४ ५ ४ १ २
(आनन्धाभीवर्तौद्वौ॥) प्रतुद्रा। वापरिकोशाम्।
२ २ १ १ १२ २ १२ ३ २ १
निषोइदा। साइदा। औचोइ। औहोउवा। नृभिः-
२ २ ३ १ १ १ १२ १
पुनानोअभिवा। जमार२३र्षा। भार्षा। भौचोइ।
१२ ३ १ १ २ २ ३
औहोउवा। अश्वमत्वावाजिनम्मा। जयार२३न्ताः।
१ १ १२ १ १२ ३ १ १२ १ १ १
यांता। औचोइ। औहोउवा। अच्छावर्हाइः। रश्म-
१२ २ १२ ५ ५ २ १ १ १ १
नाभिः। नये३४। धियाईहाउवा। तार२३४५इ॥३०॥

५२ ५ १ १ ५ ५ १ १
हाओईहा। उऊवा३४। ओईहा। प्रतुद्रवा।
१ १ ३ ४ ५ २ १ २ १ १ १
परिकोइ। अभिषोदा। नृभाइःपुना। नोइअभि।
१ २ ४ ५ २ १ १ १ २ ३ ४ ५
वाजमर्षा। अश्वमत्वा। वाइजिनम्। भर्जयन्ताः।
२ ५ ३ १ ५ ५ २ १२ २ १
हाओईहा। उऊवा३४। ओईहा। अच्छावर्हाइः।
११२ १ २ ४
रश्मना। भाइ४३इः। नाइआ५ ताई५६इ॥ ३१॥

४५ १ र
( त्रिष्टुबौशनम् ॥ ) प्रातू। द्रवापरिकोशाम्।
२ २ १ ११ २ १ २२४५
निषीइदा। नृभाइःपुना। नोइभि। वाजमर्षा।
१ रर ० २ १र २र
अश्वन्नत्वावाजिनम्मा। जयार२३ंताः। अच्छाबर्हीइः।
२१र २ २ ४
रशना। भाइ४३इः। नाइया५ाता६५६इ ॥ १२ ॥ ५७

उशनाऋषिः*। हे सोम! "नु" क्षिप्रं† "प्रद्रव" प्रगच्छ आगत्वा च "कोशं" द्रोणकलशं "परिनिषीद" निषण्णोभव। "नृभिः" नेतृभिः "पुनानः" पूयमानः "वाजम्" अन्नं यजमानार्थमुद्दिश्य "अभ्यर्ष" [वाजं सङ्ग्रामं वा] "वाजिनं" बलवन्तं "अश्वं न" अश्वमिव तं यथामार्जयन्ति तद्वत् ताम् "मर्जयन्तः" शोधयन्तः "बर्हिः" यज्ञम् अच्छ "प्रतिरशनाभिः" रशनावदायताभिरङ्गुलीभिः "नयन्ति" अध्वर्युप्रमुखाः ॥१॥ ५७

---

* "काव्यः"-इति ऋषि-मं०।

† 'अच्छ आप्नुम्'-इति वि०। मन्त्रश्रुतौ 'अच्छा'-इति दीर्घो निपातस्यात् (६, ३, १३६ पा०।)

‡ 'रशना यूपयोजनी'-इति वि०।

¶ "नु-इत्येषोऽनेककर्मा, इदन्नु करिष्यतीति हेत्वपदेशे, कथन्नु करिष्यतीत्यनुपृष्टे, नन्वेतदकार्षीदिति चाप्युपमार्थे भवति इयस्य नु ते पुरुहूतवयाः इत्यस्येव ते पुरुहूत शाखाः"-इत्यादि नि० १, ४। "नु"-इति क्षिप्रनामसु च प्रथममेवाष्टकम् (२, १५)।

§ 'बर्हिः प्रहृतम्'-इति वि०।

‖ 'रशनाः'-इति चाङ्गुलिनामसु पठितं नैघण्टुकम्।

अथ द्वितीया ।

१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
प्रकाव्यमुशनेवब्रुवाणोदेवोदेवानांजनिमाविवक्ति ।
१ २ ३ १ २ ३ २
महिव्रतःशुचिबन्धुःपावकः
३ १ २ ३ २ ३क २र ३ १ २
पदावराहोअभ्येतिरेभन् ॥२॥ ५८*

४ ५ १र १
(वाजसनीद्दे ॥ ) प्रा । कावियार्२म् । उशनेवा२ ।
१ २ १र र १र १
ब्रुवार२३णाः । देवोदेवा२ । नाञ्जनिमा२ । विवा-
२ १ १ १ २
२३क्ती । महिव्राता२ः । शुचिबन्धू२ः । पवार२३काः ।
१ र १र ३ १ ५र र २
पदावारा२ । होअभियार२ । तिरा३४औहोवा । भा
१ १ १ १
२३४५न् ॥ ३३ ॥
१ र १ १ १र र
प्रकावियार्२म् ।- उशनेवा२ । ब्रुवाणा२ः । देवा-
१र १ १
देवा२ः । नाञ्जनिमा२ । विवाक्ती२ । महिव्राता२ः ।
१ १ १ र २
शुचिबन्धू२ः । पवाका२ः । पदावारा२ । होरे ।
३ २ ५र र २ १र ३ १ १ १ १
भिया३४औहोवा । तिरेभा२३४५न् ॥ ३४ ॥

* उ० ४, २, १, १ = ऋ० ७, ४, ११, १ = अवे ६, २, ५ ;— १६, २,१९ ;—
२३, २, ३—६ ।

२र र १ २ १
(वाजजित्साम॥) प्रकाव्यमुशनेवब्रूइवाणो। दे२-

५ १र र र र १ २ १ ५ २
३४वाः। देवानाञ्जनिमावोइवाक्ती। माइ३४चौ। व्रतः

१ २ १ ५ १र र र १
शुचिबन्धुः पाइवाकः। पार३४दा। वराहोअभ्येतिरा-

२ १ १ १ १
२३। हाउवाइ। भा२३४५न्॥ ३५॥

५र र १ २ १र
(वाराहम्॥) हाउहाउ। ऊप्। प्रकावियाम्।

२ १ र २ २ ४ ५ र१र र र २ १ २ २
उशने। वब्रुवाणाः। देवोदेवा। नाइ०जनि। मावि

४ ५ २ १ २ २ ३ ४ ५ र
वक्ती। महिव्रताः। शुचिवाइ। धुःपवाकाः। हाउ

र १ २१र २ १ २
हाउ। ऊप्। पदावरा। होइअभि। आइ४३इ।

२ ४
तीइरा५इभा६५६न्॥ ३६॥

॥ इति पञ्चदशस्यार्द्धः प्रपाठकः॥

वृषगणो वासितऋषिः*। "उशने एव" तन्नामकऋषि-
रिव "काव्यं" कविकर्म स्तोत्रं "ब्रुवाणः" "देवः" सोता†

• "वृषगणो वासिष्ठः"-इति ऋषि-नै०।
† 'देवः सोमः'-इति वि०।

अयमृषिर्वृषगणोनाम "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि* "प्रविवक्ति" प्रकर्षेण वदति। [वच परिभाषणे (अदा०प०)। व्यत्ययेन विकरणस्य श्लुः (३,१,८५) बहुलं छन्दसीति (७,४,७८) अभ्यासस्य इत्वम्] "महिव्रतः" प्रभूतकर्मा†। "शुचिबन्धुः" बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा दीप्ततेजस्कः‡ "पावकः" पापानां शोधकः "वराहः" वरञ्च तदहश्च वराहः [ "राजाहःसखिभ्यष्टच्"-इति टच् समासान्तः। तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान्। अर्शआदित्वान्मत्वर्थीयोऽच्] तादृशः¶ सोमः "रेभन्" शब्दं कुर्वन्§ "पदानि" स्थानानि पात्राणि "अभ्येति" अभिगच्छति। यद्वा। यदा कश्चन वराहः "पदा" पदेन भूमिं विक्षिपमाणः शब्दं करोति तद्वत्॥ २॥ ५८

---

* 'जन्मानि कर्माणि वा'-इति वि०।

† 'महिव्रतः महतः कर्मणः व्रतस्य वा धारयिता' इति वि०।

‡ 'शुचिबन्धुः शोभनबन्धुः शुद्धबन्धुर्वा'-इति वि०।

¶ 'वराहः सोमः'-इति वि०। "वराहो मेघो भवति वराहारः। वरमाहारमाहार्षीरिति च ब्राह्मणम्। विध्यद्वराहन्तिरोअद्रिमस्तेत्यपि निगमो भवति। अयमपीतरो वराह एतस्मादेव। वृहति मूलानि वरं वरं मूलं वृहतीति वा। वराहमिन्द्र एमुषमित्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते 'ब्रह्मणस्पतिर्वृषभिर्वराहैः'। अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते—'पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून्'"-इति नि० ५, ४।

§ 'रेभन् कुर्वन्' इति नि०।

अथ तृतीया।

२ १र २र ३ १र ३र ३ १ २ ३ १र ३र ३ १
तिस्रोवाचईरयतिप्रवह्निर्ऋतस्यधीतिंब्रह्मणोमनीषाम्।
१ २ ३ १ २ ३ १ २ ३ १ १
गावोयन्तिगोपतिंपृच्छमानाः
३१ ३ २
सोमंयन्तिमतयोवावशानाः॥ ३ ॥ ५९*

१ २ १
(संक्रोशास्त्रयः॥) होइ। हो। हा२होइ।
२ १र र २ १ २३४५ १ १
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। होइयार३होइ।
२ १र र २ १ २३४ ५ २र १ १
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। आ। होइयार३होइ।
२ १र र २ १ २३४ ५ १ २१
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। होइया। इयोइया।
५ २ २ १र र २ १ २३४५
औ३हो३१इ। इया। तिस्रोवाचाः। ई३रय। तिप्रवह्नीः।
१ २१ ५ २ २ १र र
होइया। इयोइया। औ३हो३१इ। इया। तिस्रोवाचाः।
२ १ २३४५
ई३रय। तिप्रवह्नीः॥ १॥

२ १, १५ २र १
(वेणाविशाले द्वे॥) इहोइह। इहोइहा३हो।
१र० ३५ २ १र र २ १ २३४५ ४र
वाहोइह। तिस्रोवाचाः। ई३रय। तिपवह्नीः। इहो

* उ० १, १, १०, १ = ऋ० ७, ४, ३७ ४ = अष्ट २, १, १० = अध्या ३,१,६।

२ १ २ ५ ४ ४
वा५। हुहोवा२३। ई३४हहाइ। ई५। इहा।

२ १र र २ १ २ ३ ४ ५ २ १
तिस्रोवाचाः। ई३रय। तिप्रवक्रीः। हुहोवा२३।

२ ५ ४ २ १र र २ १ २ ३
ई३४हहाइ। इहा। तिस्रोवाचाः। ई३४रय। तिप्र-

४ ५ १ २ २ १ २ २ ५र र
वक्रीः। भाऔ३हो। आभौ३हो३४। औहोवा।

२ २ १र र २ १ २ ३ ४ ५ १
हा३हाइ। तिस्रोवाचाः। ई३रय। तिप्रवक्रीः। भा।

२ र र २ ३र ४र ५ २ १र र २
औ३होवाहा३४। औहोवा। तिस्रोवाचाः। ई३

१ २ ३ ४ ५
रय। तिप्रवक्रीः॥ २॥

३र २ ४ ५ ४ २ २ १ २ १
ओहो३। होहाहोहा। ऋतस्यधाइ। तौ३०ब्रह्म।

२ ३ ४ ५ १ २ १ २ ३र २ १ ३र १र
णामनीषाम्। हहहोइ। हहहाहहो३। गावोयन्ताइ।

२ १ २ ३ ४ ५ १ २ १ २ ३र २ १
गो३पतिम्। पृच्छमानाः। इहहोइ। इहहाहहोइ।

३र १ २ १ २ २ ४
सोमंयन्ताइ। मतयः। वा३४३। वा३श्वा५ना६५६ः॥

॥ ३॥ ५९

पराशरऋषिः*। "वह्निः" वोढा यजमानः "तिस्रो वाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति। तथा "ऋतस्य" यज्ञस्य "धीतिं" धारयित्रीं† "ब्रह्मणः"‡ परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याण-वाचं च प्रेरयति। किञ्च। "गोपतिं"¶ वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः" "पृच्छमानाः" पृच्छन्त्यः सत्यो "यन्ति" स्व-पयसा माश्रयितु मभिगच्छन्ति। तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारः§ "सोमं" "यन्ति" स्तोतु मभिगच्छन्ति‖ ॥ २ ॥ ५९

---

* "शाक्त्यः"-इति ऋषि-नै०। "पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवति। इन्द्रोऽपि पराशर उच्यते परा-शातयिता यातूनाम् इन्द्रो यातूना मभवत् पराशर इत्यपि निगमो भवति"-इति नि० नै०६,३०॥

† 'धीतिं कर्म'-इति वि०।

‡ 'ब्रह्मणो मनीषां वेदोक्तानि कर्माणि'-इति वि०।

¶ 'गोपतिं यजमानं हविर्दानसम्बन्धेन पृच्छमाना इव, वृषभं वा' इति वि०।

§ मतय इति स्तोतृनामसु न दृश्यते परं मेधावि-नामसु द्वाविंशतितमं मन्दु-रिति पठ्यते (३,१५)। 'मतयः बुद्धयः'-इति वि०।

‖ यास्कव्याख्यानमित्थम्—"वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्यृतस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत् सर्वमक्षरमित्यधिदैवतम् अथाध्यात्मं वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमत्ता ऋतस्यात्मनः कर्माणि ब्रह्मणो मतान्ययमेवैतत् सर्वमनुभवत्यात्मगति माचष्टे"-इति (प०१,१४)॥ विवरणकारस्तु पूर्वं यथावत् व्याख्यायानन्तरमपरमपि व्याख्यानमात्ममा-श्रितवान् तद्यथा—'यद्यपि पावमानीषु सोममुक्त्वा अन्या देवता न सम्भवति तथा-प्यष्टादशे व्याख्यातेति मत्वा तेनापि व्याख्यानानुसरणार्थं माश्रियत। तिस्रो वाचः। ऋग्यजुःसामानि अथवा तिस्रो वाचः सप्तरजस्तमांसि अथवा आयत्स्वप्नसुषुप्ति-हेतवः। ईरयति प्रेरयति उदकरश्मींश्च वहतीति वह्निरादित्यः। ऋतस्य आदित्यस्य

अथ चतुर्थी।

२ १ २ ३ २ ३ १ २ ३ १ २　१ २ ३ २ ३ १ २　३ १ २
अस्यप्रेषाहेमनापूयमानोदेवोदेवेभिःसमपृक्तरसम्।
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २　३ २ ३ १ २
सुतःपवित्रमर्येतिरेभन्मितेवसद्मपशुमन्तिहोता॥४॥६०॥*

१ १　३र ४र ५　१र　२
(अगस्त्यस्य यमिके द्वे ॥) अस्या३४औहोवा। प्रेषा। हेइ
१ र　२ ३ ४ ५　२ २　४ २　३र ४र ५
मना। पूयमानः। उहुवाइ। अस्या३४औहोवा।
१र　२ १ र　२ ३ ४ ५　२
प्रेषा। हे३मना। पूयमानाः। हाइ। उहुवा।
३र २　३र ४र ५　१र　२ १　२ ३ ४ ५
देवा३४औहोवा। देवाइ। भीः३ःसम। पृक्तारसाम्।

---

धीतिः। अथवा ऋतस्य सत्यस्य ब्रह्मणः। अथवा ऋतस्य धीति यज्ञस्य वा आदित्यस्य वा यथ इव 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते'। 'ब्रह्मणो मनीषां गावः रश्मयः तेन विसृष्टा अथवा उदकानि। एतमेव गोपतिं रश्मि-स्वामिनं वा पृच्छन्त इव सोमं यन्ति पृथिवीं वसाना सर्वोपकाराय सोमं आदित्यं मतयः। प्रज्ञायते विषयाः अस्मिप्रकाशेन इति रश्मयः। वावशाना आदित्यं यन्ति प्रविशन्ति। अध्यात्मे वज्रिरात्मा भवति। वज्रादिगुणसंयोगात्। सः तिस्रो वाचः प्रेरयति। तिस्रः बुद्धिमनांसि। तिस्रो महान्। बुद्धिरहङ्कारं मनइति प्राधान्याद् भूतेन्द्रियाणि ऋतस्यात्मनः धीतिं मनसः इष्टानि कर्माणि प्रेरयन्ति ब्रह्मणः आत्मनः। गोपाः गोपायति। आत्मानं इन्द्रियाणि स्वामिनं पृच्छमानाः। आत्मानं तदभिप्रायेण स्वध्यायमनुमन्वाता। एतमेवमात्मानं सोमस्यामयमाना इव यन्ति न भूयः तदर्थं प्रादुर्भवन्ति'-इति।

* छ० ६, २, ८, १ = ऋ० ७, ४, ११, १ = [illegible] ७,

२ ५ १२ ३र ४र ५ १ २ १
हाउ। वोइ। सुता३४औहोवा। पवाइ। आ३म्यरि।
२ ३ ४ ५ १ र ५ १ २ ३र ४र ५ १
एतिरेभान्। हा। हाऔहोइ। मिता३४औहोवा। वसा।
२ १ २ ३ ४ ५ १ २ २ ४
आ३पशु। मन्तिहोता। पशु। मा३४३। तो३होपु

ताई५६ ॥ ४ ॥
१र २र ३र २ १ २ २ १ र १ २र
औहोवाहा३होइ। इहा। अस्यप्रेषा। हे३मना।
१ २ ४ ५ २र १र र २ १ १ २ ४ ५
पूयमानाः। देवोदेवाइ। भीः३सम। पृक्तारसाम्।
२ १ २ १ १ २ ३ ४ ५ १र २र ३र २
सुतःपवाइ। आ३म्यरि। एतिरेभान्। औहोवाहा-
१ २ २ १र २ १ २
३होइ। इहा। मितेवसा। आ३पशू। मा३४३।
२ ४
तो३होपुताई५६ ॥ ५ ॥ ६०

वसिष्ठऋषिः*। "अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थः (भ्वा०प०) क्विपि रूपं। सावेकाच इति विभक्तेरुदात्तत्वं† प्रेषा] प्रेरकेण‡ "हेमना"¶ हिरण्येन "पूयमानः" हिरण्य-

* "मैत्रावरुणः"-इति ऋषि-मै०।

† "सावेकाचस्तृतीयादिर्विभक्तिः"-इति पा० ६, १, १६८।

‡ 'प्रेषा प्रकर्षेच्छया'—इति वि०।

¶ वाक्छलकारलोपाभावः।

अथ पञ्चमी।

१ २   २ १ २ ३ १ २ ३१ ३ १ २ ३१ २ ३ २
सोमःपवतेजनितामतीनाञ्जनितादिवोजनितापृथिव्याः।
७ १र २र ३ १र २र ३ १ २ ३ १र २र
जनिताग्नेर्जनितासूर्यस्यजनितेन्द्रस्यजनितोतविष्णोः॥५॥६१*

२र र र १
(कालकाक्रन्दौ॥) सोमःपवतेजनितामाइताइना२म्।
र र र १ १र र र
जनितादिवोजनितापृइथाइव्या२ः। जनिताग्नेर्जनितासू।

पाणिरभिषुणोतीति हिरण्यसम्बन्धः। तादृशः "देवः" दीप्यमानः अंशुः "रसम्" आत्मीयं "देवेभिः" देवैः सह† "समपृक्त" सम्पर्कयति संयोजयति। [पृची सम्पर्के (अदा० आ०] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्म्मितं‡ "पर्य्येति" परिगच्छति। कथमिव? "होता" देवाना माह्वाता¶ ऋत्विक् "मितेव" निर्म्मातेव§ "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान् यथा पर्य्येति तद्वत्॥ ४॥ ६०

---

* उ० ७, १, १९, १ = ऋ० ७, ४, ६, ५ = ऋचे ९, ९, १९;—८, २, १;—११, १, १०—१६।

† 'देवेभिः देवेभ्यः वसादिभ्यः'-इति वि०।

‡ दशापवित्रमित्यर्थः।

¶ होतेति व्हेञोरूपम् (६, १, २४ पा०)।

§ 'मिता कर्त्ता' इति वि०।

० २ १र २ १ २ २
रियार२३स्या। जनितेन्द्रा। स्याइजनि। ता३४३। तार

४
वा५इष्णो६५६ः॥ ६॥

२४ ५र र २ २ ४ १
सोमःपवतेजनिता। ए३। औ३हो५वाऽ। माता

२ १र २१र २१र २ १र
२३४५इना६५६म्। जनितादिवोजनितापृथिव्याः। जना-

२ ५ २ र २ ४
२इतार२३४ग्नेः। जनिता। सू३४२। री३या५स्या६५६।

२ १र २ १र २ १११
जनितेन्द्रस्यजनितातविष्णोर२३४५ः॥ ७॥

५र ४ ४ ५
(जनित्रे द्वे॥) हाउजनत्। २। जनहाउ। ३।

१ १ १र १ २
होइ। जनत्। २। होइ। जनात्। सोमःपवा। ते३

१ २ ३ ४ ५ २ १र २ १ २ १
जनि। तामतीनाम्। जनितादाइ। वो३जनि। तापृ

५ ५ २ १र २१ र २ ३ ४ ५ ५र
थिव्याः। जनिताग्नाइः। जनिता। सूरियस्या। हाउ

४ ४ ५ १
जनत्। ३। जनहाउ। ३। होइ। जनत्। २। होइ।

१र २ २ २ ४
जनात्। जनितेन्द्रा। स्याइजनि। ता३४२। ता३वा।

५इष्णो६५६ः॥ ८॥

४ ५ ४ ५ १
जनद्धाउ । ३ । जनदाउ । ३ । जनत् । वोइ । ३ ।
२र १ २ १ २ ३ ४ ५ २ १र
सोमःपवा । ते३जनि । तामतीनाम् । जनितादाइ ।
२ १ २ ३ ४ ५ २ १र २१र१ २ ४ ५
वो३जनि । तापृथिव्याः । जनिताग्नाइ । जनितासूरियस्या ।
४ ५ ४ ५ १ र २
जनद्धाउ । ३ । जनदाउ । ३ । जनत् । वोयि । ३ । जनि-
१ र २ १ २ २ ४
तेन्द्रा । स्या३जनि । तो३४३ । ता३वाउयिष्णो६५६ः

॥ ८ ॥ ६१

प्रतर्दनऋषिः* । "सोमः" अभिषूयमाणः "पवते" पात्रेषु क्षरति । कीदृशः ? "मतीनां" बुद्धीनां । यद्वा । मननीयानां स्तुतीनां "जनिता" जनयिता† [ "जनिता मन्त्रे" (६,४,५३ ) इति निपातेन णि-लोपः ] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता । तथा "पृथिव्याः जनिता" । "अग्नेः" "जनिता"

---

* "दैवोदासिः"-इति वि० ।

† अत्रेदं विवरणम्—'सोमः पवते । विनियोगोऽस्य चतुर्थेऽहनि । अधियज्ञपक्षे पर्वसोमस्य पृथिव्यादीनां । जनयितृत्वेन सम्भवात् । यज्ञद्वारेण स्थितिहेतुत्वात् जनयतीति जनिता मतीनां जनयिता दिवः जनयिताग्नेर्जनयिता सूर्यस्य जनयिता । इन्द्रस्य जनयिता । उत अपि विष्णोर्यथाभिमतइति । जनयिता पृथिव्यादिभ्यः रसेन वर्द्धयिता । अधिदैवेनेन्द्रः सोमः यदात्मनि तदायमर्थः । सर्वमिदं अयति । आत्मा सोमः पवते साधयति भोक्तृत्वात् । आत्मा सत्कारण वा । प्रधानभूतेन्द्रियाणां जनयिता पृथिव्यादीनाञ्च इत्योर्थवर्णनान्तरिक्षस्यापि अग्न्यादीनाञ्च स्थानानां तिसृणां विष्णोश्चाभिमतः ॥ "

अथ षष्ठी।

अभित्रिपृष्ठंवृषणंवयोधामङ्गोषिणॣमवावशन्तवाणीः।
वनावसानोवरुणोनसिन्धु†र्विरत्नधादयतेवार्य्याणि॥६॥६२॥‡

(अङ्गिरसां व्रतापोद्यः॥) श्रोइहायि। श्रोइहा। श्रोहा। इया२। श्रोइहाइइ। अभित्रिपा। ष्ठाइ०वृष। णंव-योधाम्। अङ्गोविणाम्। अवाव। शन्तवाणीः। वनावसा। नोइवरुणोनसिन्धूः। श्रोइहायि। श्रोइ-हा। श्रोहा। इया२। श्रोइहाइइ। विरत्नधाः। दयते। वाइ४इ। रीइयापणाई५६यि॥१०॥ ६२

प्रकाशयिता। 'सूर्य्यस्य' सर्व्वप्रेरकस्यादित्यस्य "जनिता" "इन्द्रस्य" जनिता पानेन मदस्य जनयिता। "उत" अपि च। "विष्णाः" व्यापकस्य "जनिता" जनयिता¶। एतत्सर्वं सोमेऽभिषूयमाणे भवति सोमेन हि देवताप्यायन्तइति॥५॥६१

* "वाजूशानाम्"-इति, } क०।
† "सिन्धूम्"-इति च }

‡ उ० ६, २, ११, १=ऋ० ७, ३, २६, २ = ऋर्चे ७, २, १७।

¶ तथाच यास्कः—"सोमः पवते सोमः सूर्य्यः प्रसवनाज्जनिता मतीनां प्रकाशकर्मणा आदित्यरश्मीनां दिवो द्योतनकर्मणा आदित्यरश्मीनां पृथिव्याः प्रथनकर्मणा

अथ सप्तमी।

१ २　३१ २ ३ १र २र ३ १ ३ ३ १र ३र　१ २
**अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य गोपाः*।**

वसिष्ठ ऋषिः†। "त्रिपृष्ठं" त्रीणि पृष्ठानि द्रोणकलशादिस्थानानि सवनानि वा यस्य स तथोक्तस्तम्। "वृषणं" वर्षकम्। "वयोधाम्" अन्नस्य दातारम्‡। "अङ्गोषिणं" आघोषन्तं सोमं¶ "वाणीः" स्तोत्ररूपा वाचः "अवावशन्त" कामयन्ते शब्दायन्ते वा। "वना" वनानि उदकानि "वसानः"। आच्छादयन् "वरुणो न" वरुण इव§ "सिन्धुः" अपां स्यन्दयिता पर्यन्तप्रदेशानाच्छादयति तद्वत्। "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि‖ "दयते" स्तोतृभ्यः प्रयच्छति ॥ ६ ॥ ६२

---

मादित्यरश्मीनां, सूर्यस्य लोकरञ्जकमंशामादित्यरश्मीनां, विष्णोर्यांग्निकर्मणा मादित्यरश्मी नामित्यधिदैवतम्। अथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः। अपिवा सर्वाभिर्विभूतिभिर्विभूतत आत्मेत्यात्मगति माचष्टे"—इति प० १, १२।

* "भुवनस्य राजा"—इति ऋ०।

† "मैत्रावरुणः"—इति ऋषि·मै०।

‡ "द्युतः", "द्युतं", "वयः"-इति त्रीण्यपि पदानि पाठभेदात् सप्तमनैघण्टुकले न यन्ते (१, ७)। 'वयोधा अन्नानां धातारं यशस्विनं वा'—इति वि०।

¶ "आङ्गूषः स्तोम आघोषः "एनाङ्गूषेण वयमिन्द्रवन्तः" अनेन स्तोमेन वयमिन्द्रवन्तः"—इत्यादि नि० ५, ११।

§ "वरुणः वृणोतीति सतः"—इत्यादि नि० १०, ३—४।

‖ 'वार्याणि वननीयानि धनानि'—इति वि०।

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १२ ३ २र ३ १र
वृषापवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे स्वानो*-
२र
अद्रिः ॥ ७ ॥६३†

२ १ १ २र १ २ १र २ १
(सम्यावैयश्वम् ॥) हो। होपि। अक्रान्समुद्रः प्रथमे विधर्मान्।
१ २ १ २ १ २ र १ १ १ र
होहोयि। जनयन्प्रजाभुवनस्य गोपाः। हो। होयि वृ
२र १ २र १ १ २र २ऽ १ २ १
षापवित्रे अधिसाने २ अ। व्यायि। हो। हो। वृह
र र ७ र र र २र र २ र र २
त्सोमो२वावृधे स्वाने २ अ। द्रा। औ३। होवाहाउवा
२ २र २र १ १ १ १
३। ए३। स्वानाअ। द्री२३४५ः॥ ११ ॥ ६३

पराशरऋषिः‡। "समुद्रः" अस्मादापः समुद्रवन्ति स समुद्रः अपां वर्षकः। "गोपाः" यज्ञस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुवनस्य" उदकस्य¶ "विधर्मन्" विधारकेऽन्तरिक्षे "प्रजाः" "जनयन्" उत्पादयन् "अक्रान्" सर्व्वमतिक्रामति [क्रमते-र्लुङि, तिपि, इड़भावे हल्ङ्यो च क्रतायां सिज्लोपे मकारस्य

* "स्वान"—इति क०।

† उ० ५, २, १, १=ऋ० ७, ४, १८, प= अष्टे १०, २, १;—१६, २, ५—८—९; अष्टे९, २, ५।

‡ "शाक्तयः"—इति क-खि-गे०।

¶ "भुवनम्"-इति उदकनामसु पञ्चाशत्तमं नैघण्टुकम् (१,१२)।

अथाष्टमी।

१ २ ३ २ ३ २ २ १ २ २ २ ३ १ २ ३ १ २ ३ २
कनिक्रन्ति हरिरासृज्यमानः सीदन्वनस्य जठरे पुनानः।
१ २ ३ १ ३ २ २ ३ १र २र ३ १ २ ३ १ २
नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः॥८॥६४ *

मोनोधातोरिति नकारे रूपम्] "वृषा" कामानां वर्षिता "स्वानः" अभिषूयमाणः† ॥

"अद्रिः"-"इन्दुः" इति च सामऋचः पाठौ ॥ ७ ॥ ६३

---

* ऋ० ७, ४, ५, १।

† अत्रेदं विवरणम्—

अक्रान् समुद्रः विनियोगोऽस्य नवमेऽहनि, आक्रमणात् प्रथमे परमे उत्कृष्टे विधर्मणि धारणेन जनयन् प्रजाः प्रजायन्त इति प्रजाः देवाः याः भुवनस्य गोपाः भूतानां रक्षिता वृषा वष्टा पवित्रे वा समाय। अधि उपरि सानौ समुच्छ्रितो अव्ये अविमये। बृहत्सोम वावृधे वर्द्धते स्वानः अद्रिः अदरणः। अथः अक्रान् समुद्रः सामर्थ्यात् अत्यक्रमीत् अतीतं गच्छत्युदयादस्तं सदा समुद्रः। आदित्यः प्रथमे प्रकृष्टे व्योमन् सामर्थ्यादन्तरिक्षे प्रजा अजनयन् वर्षकर्मणा। भुवनस्य त्रैलोक्यस्य गोपा रक्षिता वृषा वर्षकर्मेशः। पवित्रे वाग्निमये अधिसानः अभिषिच्यमाणः सौम्यैः। वावृधे वर्द्धते बृहदिति बृहद्विशेषणम्। स्वानः सुतः अद्रिरादित्य अदरणः अत्यक्रामत् अधिष्ठितवान्। समुद्रः आत्मा अभिद्रवत् तं भूतानि परमेभ्यः व्ये भूतेन्द्रियकर्मिमच्छरीरे अजनयन् ज्ञानकर्मणा बोध मुत्पादयन् प्रजा वर्द्धयन्। भुवनस्य गोप्ता प्रकाशकत्वात्। वृषा पवित्रे सत्त्वमये आत्मा वर्षिता भवति शरीररूपेण पवित्रे प्राणमये अवतेर्गत्यर्थः। गत्यर्थाश्च बुद्ध्यर्थाः। अधिसानो समुच्छ्रयमाण-शब्दादिषु मचलक्षणे सुष्ठु वर्धितं पवित्रे। अथः अद्रिः अदरणः"—इति ॥

यास्कस्त्वेवं व्याख्यातवान्—"अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा अजनयन् प्रजा भुवनस्य राजा सर्वस्य राजा। वृषा पवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे सुवान इन्दु रित्यधिदैवतम्। अथाध्यात्ममत्यक्रमीत् समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा अजनयन् प्रजाः भुवनस्य राजा सर्वस्य राजा। वृषा पवित्रे अधि सानौ अव्ये बृहत्सोमो वावृधे सुवान इन्दु रित्यात्मगतिमाचष्टे"—इति प० १,११।

४ ५ १ १ २र १
(साम सामनि द्वे॥) कानो। क्रान्तो२क्रान्तो२। हरिराहज्य-
२ ४ ५ १ २र१ २
मा२३ना३ः। सायिदान्। वाना२वाना२। स्यजठरेपुना२३-
२ ४ ५ १ १ २र १ २र
ना३ः। द्रभीः। याता२याता२ः। कृण्वतेनिरिर्णिजा२३-
२ ४ ५ १ १ १ १ २
गा३म्। याताः। माती२म्माती२म्। जनयता२३स्वार२धा
५र २र २ १ १ १ १
२३४ओहावा। भो२३४५ः॥ १२॥

३ ४ ५ २र २ २ २र २ २ २ ५
कनिक्रन्तिहा। होयि। हरिराहज्य। मा२३४ना।
२र १ २र २र १ १ २ २र १
हाहोयि। सोदन्वनस्यजठरेपुना२३नाः। हाहोयि। नृभि
२र २ १ २ २र १ २र
र्यतःकृण्वतेनिर्णिजा२३ङ्गाम्। हाहोयि। अतोमतायिम्
७ १ २ ५र २र २ १ १ १ १
जनयता२३। स्वा२धा२३४औहोवा। भो२३४५ः॥१३॥६४

प्रस्कण्व ऋषिः*। "सृज्यमानः" आ समन्ताद्विसृज्यमानो-ऽभिषूयमाणः† "हरिः" हरितवर्णः सोमः "कनिक्रन्ति" पुनः पुनः शब्दायते [क्रन्दतेर्यङ्लुकि, तिपि, इडभावे, "दाधर्त्तिदर्धर्त्ती त्यादिना‡ निपातनादभ्यासस्य निगागमः। अभ्यस्तस्वरः¶ ]

---

* "काण्वः"-इति ऋषि-नै०।

† 'सृज्यमानः संसूयमानः'-इति वि०।

‡ "दाधर्त्ति दर्द्धर्त्ति दर्द्धर्षि बोभूतु तेतिक्ते ऽलर्ष्यापनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदत् भरिभ्रत् दविध्वतो दविद्युतत् तरित्रतः सरीसृपतं वरीवृजत् मर्मृज्यागनीगन्तीति च" —इति पा० ७, ४, ६५।

¶ "अभ्यस्तानामादिः"-इति पा० ६, १, १८९।

अथ नवमी।

१२उ ३ १ २　　२ १ २ २३२ २ १ २ ३ १ २
एषस्यतेमधुमाँइन्द्रसोमोवृषावृष्णःपरिपवित्रेअक्षाः।
२ १ २३१ २३१२ ३१२ ३१२ ३ २क ३र
सहस्रदाःशतदाभूरिदावाशश्वत्तमम्बर्हिरावाज्यस्थात्॥८॥६५*
४ ५ ४५ २ २　　४ ५ र　　४र ५
(ऐषम्॥) एषाएषाः। स्यता३१२३४यि। मधुमाँइन्द्रसोमः।
र　　२ २　　५ ४५र र
वृषावृषाईए। वृष्णो३१२३४ः। परिविन्त्रेअक्षाः। सहसहा
५ ३ २　　५ ४र ५　　४र५र　　५
ईए। स्रदा३१२३४ः। शतदाभूरिदावा। शश्वच्छश्वाईदे।
१ २　　र५र ४ ५　　५　　५
तमा३१२३४म्। बर्हिरावाजिपि। ह्वियाईहाउवा स्था२
११११
२३४५त्॥ १४ ॥ ६५

तथा "पुनानः" पूयमानः "वनस्य" वननीयस्य चास्य द्रोण-कलशस्य "जठरे" "सीदन्" उपविशन् शब्दायते। किञ्च "नृभिः" कर्म्मनेतृभिर्ऋत्विग्भिः "यतः" संयतः सोमः "गाः" गो-विकारान् क्षीरादीन् आच्छादयन् "निर्णिजं" शुद्धम् आत्मनोरूपं† "कृणुते" ग्रहादिषु करोति। अतोऽस्मै सोमाय "मतिं" मननीयां स्तुतिं "स्वधाभिः" हविर्भिः सह "जनयत" स्तोतारोऽजनयन् [झस्यान्तादेशाभावः छान्दसः। अडादेशः] यद्वा हे स्तोतारः अस्मै सोमाय स्तुतिं जनयत उत्पादयत कुरुतेति यावत्॥ ८॥ ६४

* ऋ० ७, ३, २१, ४।
† "निर्णिक्"-इति रूपनामसु प्रथमं नैघण्टुकम्(३, ७)।

अथ दशमी।

१२ ३१२ ३१ ३१र १र३ २ ३१ ३ १ २
पवस्वसोममधुमाꣳऋतावापोवसानोअधिसानोअव्ये।

३ १ २ ३१२ ३ १ १ ३१२३
अवद्रोणानिघृतवन्ति*रोहमदिन्तमोमत्सरइन्द्र-

१ २
पानः ॥ १० ॥ ६६†

॥ इति चतुर्थ-दशति ॥ ४ ॥

उशनाऋषिः‡। हे इन्द्र! "वृष्णः" वर्षकस्य "ते" तुभ्यं [चतुर्थ्यर्थे षष्ठी¶] "एषः" "स्यः§" स सोमः "मधुमान्" माधुर्योपेतः "वृषा" वर्षकः "पवित्रे" "पर्यक्षाः" पर्यस्रवत् [क्षरतेर्लुङि रूपम्] स एव "सहस्रदाः" सहस्रसङ्ख्याकस्य धनस्य दाता "शतदाः" शतसङ्ख्याकस्य दाता "भूरिदावा"‖ ततोऽपि भूरेर्दाता 'वाजी' बलवान् सोमः "शश्वत्तमम्" अतिशयेन पुराणं "बर्हिः" यज्ञम् "अस्थात्" अधितिष्ठति ॥

"वृषा वृष्णः"-"वृषा वृष्णे"—इति, "सहस्रसाः"-"शतसाः" इति च साम्नऋचः पाठाः ॥ ९ ॥ ६५

* "घृतवाचि"—इति ऋ०।

† ऋ० ७, ४, ८, २।

‡ "काव्यः"—इति ऋषि-मे०।

¶ "षष्ठ्यर्थे चतुर्थीति वाच्यम् (२, ३, ६२.)"—इति कात्यायनवचनादित्यर्थः।

§ "स्यश्छन्दसि बहुलम् (पा० ६, १, १३३)"—इतीह तस्मै स इत्यस्य सोर्लोपः।

‖ "आतो मनिन्क्वनिब्वनिपश्च (पा० ३, २, ७४)"—इति वनिपि रूपम्।

२ ३ ५ १२
(माधुच्छन्दसम् ॥) हाओ२३४वाइ । इडा३१ ।
२१ २ १ २ ३४५ ११र
पवस्वसो । मा३मधु । मा२ऋतावा । अपोवसा ।
२ १ १२र ४ ५ ११ र २ १
नो३अधि । सानोअव्याइ । अवद्रोणा । नी३घृत ।
१ ३४ २ २ ३ ५ ३२ २१
वन्तिरोहा । हाओ२३४वाइ । इडा३१ । मदिन्तमो ।
२१ २ २ ४
मत्सरः । आ२३४३इ । द्रा३पा५नाई५ई: ॥ १५ ॥ ६६

प्रतर्दनऋषिः* । हे "सोम !" "मधुमान्" [मत्वर्थीयः] तादृशस्त्वं "अपः" वसतीवरीः एकधनाः "वसानः" आच्छादयन् "अधि" अधिकं "सानो" समुच्छ्रिते "अव्ये" अविमये पवित्रे "पवस्व" क्षर । ततः "मदिन्तमः" अतिशयेन मदकरः "इन्द्रपानः" इन्द्रेण पातव्यः "मत्सरः" मादयिता सोमः "घृतवन्ति" उदकवन्ति† "द्रोणानि" द्रोणकलशान् "अवरोह" प्रादुर्भवसि ॥

"रोह"-"सीद"—इति पाठौ । १० ॥ ६६

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

* "देवोदासिः"—इति ऋषि-सं० ।

† "घृतम्"—इत्युदकनामसु दशमं नैघण्टुकम् (१, २) ।

अथ सप्तमे खण्डे--

सैषा प्रथमा।

१२ ३ २र ३ १ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रसेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना।
३ २ ३ १ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
भद्रान्कृण्वन्निन्द्रहवांत्सखिभ्य आ सोमो वस्त्रा रभसानि-

दत्ते॥ १॥ ६७*

२ ५ २ ५
(कुत्सस्याधिरथीयानि त्रीणि॥) हो४वा। उऊवा

४ ५ ३ १र २र १ र र २ २ ३ ४
३। होवा। प्रसेनानाइः। शूरोआ३। अग्राइरथा

५ २ १ २र १ २ २ ३ ४ ५ २ १र
नाम्। गव्यन्नेताइ। हर्षता३इ। अस्यसेना। भद्रा

१ १ २ २ ३ ४ ५ २र १र २र १
न्कृण्वान्। इन्द्रहा३। वांत्सखिभ्याः। आसोमोवा।

१ १ २र ३ ४ ५ ३ ५ ३ २ ४
स्त्राइरभ। सानिदत्ताइ। हो४वा। उऊवा३। हो

५ ५
वा६। हाउवा॥ १६॥

५र ४ २ १११ २ १र २र १ र र २ २
ओहो३वा३४५। प्रसेनानाइः। शूरोआ३। अग्राइ

३४ ५ २ १ २र १ २ २ ३ ४ ५
रथानाम्। गव्यन्नेताइ। हर्षता३इ। अस्यसेना।

२ १र २ १ २ २ ३ ४ ५ र ४
भद्रान्कृण्वान्। इन्द्रहा३। वांत्सखिभ्याः। औहो३

* ऋ० ७,४,६,१।

२ ११११　२र १र २र १　२ १　१　२
वा३४५। आसोमोवा। स्वा३रभ। सा३४३। नौ२
४
दा५त्ताई५६इ॥ १७ ॥

१र ३　२ १११　१ र २र १　र र २　२
औहोऽवा३४५। प्रसेनानाइः। शूरोआ३। आइ
३ ४ ५　३　२र १　२　१ ३ ४ ५
रथानाम्। गव्यन्नेताइ। हर्षंता३इ। अस्यसेना।
३ र　२ १　२　२ ३ ४ ५　र ४ २
भद्रान्कृण्वन्। इन्द्रवा३। वांसखिभ्याः। औहोऽवा
१११　२र र २र १　२ १　२　२ ४
३४५। आसोमोवा। स्वा३रभ। सा३४३। नौ२दा५।
२ १ १ १
ता२३४५इ॥ १८॥ ६७

प्रतर्दनऋषिः*। "सेनानीः" सेनाना मग्रे नेता। "शूरः" शत्रूणां बाधकः "सोमः" "गव्यन्"† इच्छन् यजमानानां पश्वा-दिक मिच्छन् "रथानाम्" "अग्रे" पुरतः "प्रेति" प्रकर्षेण सङ्ग्रा-मङ्गच्छति। "अस्य" सोमस्य "सेना" च "हर्षते" हृष्यति [वाक्य-भेदादनिघातः] किञ्च "सखिभ्यः" समानख्यानेभ्यो यजमा-नेभ्यः "इन्द्रहवान्" तैः कृतानि इन्द्रस्य आह्वानानि "भद्रान्" कल्याणानि यथार्थानि "कृण्वन्"। आहूतो हीन्द्रः सोमं पीत्वा

* "देवोदासिः"—इति ऋषि-ज्ञे०।

† "छन्दसि परेच्छाया मपि क्यच् वक्तव्यः"—इति श्लौपाध्यायीय-कात्यायन-वचनादिह क्यचि रूपम्।

अथ द्वितीया।

२ ३ १ २ ३ १ २  २ ३ १ २ ३ १ २ ३ १र २र
प्रतेधारामधुमतीरसृग्रन्वारंयत्पूतोअत्येष्यव्यम्।
१ २ ३ १ २ ३ १ ३ १ ३ १ २ ३ १ २ ३ १ २
पवमानपवसेधामगोनाञ्जनयंत्सूर्यमपिन्वोअर्कैः ॥२॥६८*

२र २ १
(वैयश्वज्योतिषाणि त्रीणि ॥)  हाउहोवा३हाइ।
२ २ २ १ ० १ १ १ १ २र २ १
प्रतेधारामधुमा३ताइरसृग्रा२३४५न्। हाउहोवा३हाइ।
२ २ २ १ ० १ १ १ १ २र २
वारंयत्पूतोअतौ३यराइषिआव्या२३४५म्। हाउहोवा३
१ २ ३र १ ० १ १ १ १ २र २
हाइ। पवमानपवसे३धामगोना२३४५म्। हाउहोवा

कामान् प्रयच्छतीति। “रभसानि” इन्द्रस्य वेगेनागमन-निमित्तानि “वस्त्रा” वस्त्राण्याच्छादकानि पयःप्रभृतीन्याश्रयणानि “आ दत्ते” आ गृह्णाति † ॥ १ ॥ ६७

---

* ऋ० ७, ४, १७, १।

† अत्र विवरणं यथा—“प्रसेनानी। सेनां नयति इति सेनानीः। शूरः विक्रान्तः। अग्रे रथानां ये देवरथाः गव्यन् इच्छन्। अस्य पृथिव्यां भवं प्रेति प्रयाति। हर्षन्ति अस्य सेना भद्रान् भन्दनीयानि। कुर्वन् जयन्। इन्द्रहवान् इन्द्रियाणि। सखिभ्यः ऋत्विग्भ्यः। एवं गुणविशिष्टः। सोमः वस्त्राणि रभसानि पतन्ति। आदत्ते परसैन्येभ्यः। अथवा सेनानीः स्कन्दः शूरः विक्रान्तः। अग्रे पुरतः देवरथानां गव्यम्। पृथिव्यां भवम्भवम्। राति गृह्णाति ददाति सैन्येभ्यः सोमइव रश्मीन् वस्त्राणि सैन्येभ्यो ददाति॥”—इति।

अथ तृतीया ।

१ २　२क २र　२ १र　२र　३ १र　२र

प्रगायताभ्यर्चामदेवांत्सोमꣳहिनोतमहते धनाय ।

३ १ २　२ १ ३ २ ३ २ ३ १ २　३ १ २ ३ १ २र

स्वादुःपवतामतिवारमव्यमासीदतुकलशन्देव इन्दुः॥३॥६९*

२　र　१　७र　१ १ ११　२र

इहाइ । जनयंत्सूर्यमाइपाइन्वोअर्का३३४५इः । हाउ

र　२　१ १ १ १

वोवा३हाउ । वा३४५॥ १९ ॥ ६८

पराशरऋषिः† । तदा प्रसूयन्ते "यद्" यदा "पूतः" वसतीवरीभिस्त्वं "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि" अतीत्य गच्छसि । किञ्च हे "पवमान" शोध्यमान सोम! "गोनां‡" गवां¶ "धाम" धीयते पीयत इति धाम पयः तत् वसनीकृत्य "पवसे" क्षरसि । ततः "जनयन्" जायमानस्त्वं "अर्कः" अर्चनीयैः स्व-तेजोभिः "सूर्यम्" आदित्यम् "अपिन्वः" पूरयसि ॥

"वारं यत्पूतोअत्येष्यव्यम्"–"वारान्यत्पूतो अत्येष्यव्यान्"—इति, "जनयन्"–"अग्मानः"—इति च साम्नऋचः पाठो ॥ २ ॥ ६८

---

* ऋ० ७, ४, ११, ४ ।

† "शाक्तः"—इति ऋषि-सं० ।

‡ "गोः पादान्ते (७, १, ५७)"—इति सिद्धं गोनामिति ।

¶ 'गवां रश्मीनां गन्तृकाणां वा'—इति वि० ।

२ १र   २ १   २ ३ ४ ५   २र १
प्रगायता। अभिय। चामदेवान्। सोमꣳ-
२ १   २ ३ ४ ५   २र १   २
हिनो। ता३मह। तेधनाया। स्वादुःपवा। ता३
१   २ ३ ४ ५   २र १र   २ १   २
मति। वारमव्याम्। आसीदतु। कलशम्। दा-
२ ४
३४३इ। वा३आ५इन्दू६५६ः॥ २०॥ ६९

इन्द्रप्रमतिर्वासिष्ठऋषिः। हे स्तोतारः! "प्रगायत" 'सोमं' प्रकर्षेणाभिष्टुत। वयन्तु "देवान्" "अभ्यर्चामः" अभिष्टुमः*। यद्वा। देवानभ्यर्चामोऽभ्यर्चत [ पुरुष-व्यत्ययः]। किञ्च। "महते" महत् प्रभूतं धनाय धनं प्राप्तुं सोमं "हिनोत"† अभिषवार्थं प्रेरयत [ क्रियार्थोपपदस्य च कर्मणि स्थानिनः (२,३,१४,)-इति धन-शब्दस्य चतुर्थी ] ततः "स्वादुः" मधुरः सोमः "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अतिपवताम्' अतीत्य चरतु। "देवः" द्योतमानः। सोमः "इन्दुः" दीप्तः सन् "कलशं" द्रोणम् "अति आसीदतु" आभिमुख्येन तिष्ठतु॥

"पवतां"-"पवाते"—इति, "देवइन्दुः"-"देवयुर्न"—इति साम्नऋचः पाठो॥ ३॥ ६९

* 'स्तोवरश्चैव'—इति वि०।

† "तप्तनप्तनथनाश्च (७, १, ४५ पा० )"—इति तपि चित्त्वं हिनोतेति।

अथ चतुर्थी ।

१ २ ३ १ २ ३ १र २र ३ २ ३ १र २र ३ १ २
प्रहिन्वानोजनितारोदस्योरथोनवाजꣳसनिषन्नयासीत् ।
३ १ २ १ २ ३ १ २ ३ २ ३ ३ १ २ ३ १
इन्द्रङ्गच्छन्नायुधासꣳशिशानोविश्वावसुर्हस्तयोराद-
२
धानः ॥ ४ ॥७०*

२र २ २ २ २ २ १ २र ५र
हाउहोवा३हाइ । प्रहिन्वानोजनितारो३४३दसीयोः ।
२र २ १ २ २ १ २र ५र
हाउहोवा३हाइ । रथोनवाजꣳसनिषा३४३नयासीत् ।
२र २ १ २ २ १ २र ५
हाउहोवा३हाइ । इन्द्रङ्गच्छन्नायुधासा३४३ꣳशिशानः ।
२र २ १ २ २ १ २र ५ ४
हाउहोवा३हाइ । विश्वावसुर्हस्तयोरा३४३दधानः । दधा

५नाउ । वा ॥ २१ ॥ ७०

वसिष्ठऋषिः† । "प्रहिन्वानः" अध्वर्युभिः प्रेर्यमाणः‡ "जनिता"¶ उत्पादयिता "रोदस्योः" द्यावापृथिव्योः§ तयोर्जनयितृत्वं वृष्टिप्रदान-हविः-प्रापणाभ्याम् । तादृक् सोमो "वाजम्" अन्नं "सनिष्यन्" दास्यन्|| "प्रायासीत्" प्रगच्छति ।

* ऋ० ७, ३, २९, १ ।　　† "मित्रावरुणः"—इति ऋषि-औ० ।

‡ 'प्रीणानः गच्छन् वा'—इति वि० ।

¶ "जनिता मन्त्रे (६,४,५३)"—इति पा० ।

§ "रोदसी"—इति द्यावापृथिवी-नामसु चतुर्थं नैघण्टुकम् (३, ३० ) ।

|| 'सनिष्यन् सम्भजमानः'—इति वि० ।

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ १ र २र ३ १ २ ३ १ र २र
तव्यदीमनसोविनतोवागज्येष्ठस्यधर्मन्द्युक्षोरनीके।
१ २ ३ २ ३ १ २ २ २उ ३ १ २ ३ १ २ २ २ ३ १ २
आदीमायन्वरमावावशानाजुष्टम्पतिङ्कलशगावइन्दुम् ५७१

२ ४ ५र २ १ १ १ १ २ ४
(वाचःसामनी द्वे)॥ तव्यदी। होऽ२३४५इ। मन-
२ ३र ४ ५ ३ १ १ १ १ २र ४ ५ ३ १ १ १ १
सोविनतः। वाऽ२३४५क्। ज्येष्ठस्यधा। होऽ२३४५।
४ २र ४ ५र ३ १ १ १ १ ३र ४र ५र ३ १ १ १ १
मन्द्युक्षोरनी। काऽ२३४५इ। आदीमायन्। होऽ२३४५इ।
२ ४ ३र ४र ५ र ३ १ १ १ १ ३ ४ ५ ३ १ १ १ १
वरमावावशा। नाऽ२३४५ः। जुष्टम्पतिम्। होऽ२३३५इ।
४ र
कलशगाऽ५वः। इ। दाउ। वा॥ २२॥

२ १ २ २ ४ र ३र ४ ५ २ १ १ १ १
तव्यदाऽ३१२३४इ। मनसोविनतः। वाऽ२३४५क्।
२र १ २ ३र ४ ५र ३ १ १ १ १ २र १
ज्येष्ठस्यधाऽ३१२३४। मन्द्युक्षोरनी। काऽ२३४५इ। आदा-

"इन्द्रकृष्छन्" प्राप्नुवन् "आयुधा" "आयुधानि" "संशिशानः" सम्यक् तीक्ष्णीकुर्व्वन् इन्द्रं सहायगमनार्थं तीक्ष्णायुधः सन् "विश्वा"† सर्व्वाणि "वसु"‡ वसूनि धनानि "हस्तयोरादधानः" अस्मभ्यन्दानाय एवं कुर्व्वन् प्रायासीत्॥ ४॥ ७०

---

* ऋ० ७, ४, ११, २।

†,‡ 'विश्वा'—इति सुप आले, 'वसु'—इति सुपो लुकि च रूपम् (७, १, ३९)।

२          १ ४ ३ २ ४ २ ५ २          १ १ १ १ १          २ १
इमाया३१२३४न् । वरमावावश्रा । नार२३४५: । जुष्ट-
२          २
म्यता३१२३४इम् । कलशेगा५वः । इ । डा३ । वा ।
॥ २३ ॥ ७१

मृडीको वासिष्ठऋषिः । "वेनतः" [वेनो वेनतेः कान्ति-कर्म्मणः (१०,४,३८)"—इति यास्कः] कामयमानस्य "मनसः" [मनो मन्यतेः स्तुतिकर्म्मणः*] स्तोतुः "वाक्" स्तुतिलक्षणा† यद्येनं "तक्षत्" संस्करोति‡ । "धर्म्मन्" धारके¶ यज्ञे "ज्येष्ठस्य" प्रशस्यस्य "घृष्णोः" दीप्त-स्तुतिकस्य [दृष शब्दे(भ्वा०प०)इत्यस्मात् कु-प्रत्ययः] सवनस्य "अनीके" प्रमुखे यदा यज्ञेषु सवन-मुखे स्तोतुर्वाक् सोमं स्तौतीत्यर्थः । "आ" अनन्तरमेव "वरं" वरणीयं "जुष्टं" देवानां मदाय पर्याप्तं "पतिं" सर्वस्य पालकं "कलशे" स्थितं "इन्दुम्" "ईम्" एनं सोमं "वावशानाः" कामयमानाः "गावः" "आयन्" पयसा स्वीयेन मिश्रयितु मागच्छन्ति ॥

"धर्म्मन्"-"धर्म्मणि"—इति पाठौ ॥ ५ ॥ ७१

* "मन्यते"—इति स्तुति-कर्मसु चतुर्विंशतौ पठितम् (३, १४)।
† 'वाक् स्वचितम्'—इति वि० ।
‡ 'तक्षत् करोति'—इत्येव वि० ।
¶ धारणार्थ--धृ-धातोः कर्त्तरि मनिपि धर्म्मन्निति ततश्छान्दस-लुकि रूपम् ।

अथ षष्ठी ।

२ १२ २१२ ३२३१२ ३२३ १२
साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः ।
३१२ ३१र ६र३१२ ३२३२३२
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ ६ ॥७२*

४५ १र २१
(दाश्वस्पत्ये द्वे ॥) साकाम् । उक्षोमर्जयन्त । स्वसा

२ १ १र र११ २ १
२३राः । दाशा२ । धीरस्यधीतयोधनू२३त्रीः । हारी

१ र ० २ १ १
२: । पर्यद्रवज्जाःसूरिया२३स्या । द्रोणा२म् । नन-

र र २ १११२
क्षेअत्योनवा२३ । हाउवा३ । जी२३४५ ॥ २४ ॥

५र ५ २ ५ ४५र
साकमुक्षाइए । ए३१२३४ । मर्जयन्तस्वसारः ।

र ५ २ ५र४५र४५४ ५
दशधीराइए । ए३१२३४ । स्यधीतयोधनुत्रीः । हरिः

५ २ ५४र र५ र ५
पर्याइए । ए३१२३४ । द्रवज्जाःसूर्यस्य । द्रोणन्ननाइए ।

२ र ५र४५ ५ ३११११
ए३१२३४ । क्षेअत्योनवाई । हाउवा । जी२३४५ ॥२५॥ ७२

* उ० ६,२,१५,१=ऋ० ७,४,२,१=ऋग्वे ९,९,७ – १२,१,९ – १८,२,४ ।

अथ सप्तमी।

२ ३ १ २    ३    १ २  ३ २  ३  १  २  ३  २ ३  २  ३ १ र  २ र
अधियदस्मिन्वाजिनीवशुभस्पर्द्धन्तेधियःसूरेनविशः।

३ १ २ ३  १ २  ३ १ २    ३ १ र  २ र ३ १ २    ३ १ २
अपोवृणानःपवतेकवीयान्व्रजन्नपशुवर्द्धनायमन्म॥ ७ ॥७३*

नोधाऋषिः†। "साकमुचः" [उच सेचने (भ्वा०प०) क्विपि रूपम्] तादृश्यः "स्वसारः" कर्म-करणार्थं मितस्ततः सुष्ठु गच्छन्त्यः‡ अङ्गुलयः¶ "मर्जयन्त" सोमं शोधयन्ति [मृजू शौचालङ्कारयोः (चु०उभ०] ताः दशसङ्ख्याकाः "धीतयः" [अङ्गुलिनामैतत् (नै०२,५,७] अङ्गुलयः "धीरस्य" समर्थस्य प्राज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति§। ततः "हरिः" हरितवर्णः सोमः "सूर्य्यस्य" "जाः" प्रादुर्भूता जाया दिशस्ताः‖ "पर्य्यद्रवत्" परितो गच्छति। सूर्य्यस्य तेजसा हि आविर्भवतीति दिशां तस्य जायात्वम्। "अत्यः" अतनशीलः "वाजी न" अश्व इव स्थितः सोमः "द्रोणं" कलशं "ननक्षे" व्याप्नोति [नक्षति-र्व्याप्ति-कर्मा (नै०२,१८,२)॥ ६ ॥ ७२

---

* ऋ०७,४,४,१।

† "गौतमः"—इति ऋषि मे०।

‡ सृ शब्दोपतापयोः (भ्वा० प०)—इत्यस्य रूपं स्वसेत्यभिप्रायः।

¶ "स्वसारः"—इत्यङ्गुलि-नामसु त्रयोदशतमं नैघण्टुकम्।

§ "वायन्ति"—इति वि०।

‖ "अपत्यम्"—इति वि०। "जाः"—इत्यपत्यनामसु नवमं नैघण्टुकम् २,२।

४ ५ ४ २ ३र १
( काश्यपस्य च शोभनम् ॥ ) अधियदा। स्माइ्न्वारजि
३र १ २ ३ १ २ १ २ ४ ५
नीरवशुऽ। भाः। स्पर्द्धन्तेधियःस्व। राइनविशाः।
२ १र २ ७ २ १
अपोवृणानःपवताइ। कवी२३यान्। व्रजन्न। पा।
२ १ २ २ ४
शुवर्ह। ना३४३। या३मा५न्माई५ई॥ २१॥ ७३

कण्व ऋषिः*। "यद्" यदा "अस्मिन्" सोमे "वाजिनीव शुभः"† अश्वे यथा वस्त्रप्रभृत्यलङ्कारा भवन्ति। यदा वास्मिन् सोमे "सूरे न" सूर्य्ये न यथा सूर्ये "विशः" रश्मयः उदिता भवन्ति तदा "धियः" अङ्गुलयः "अधिस्पर्द्धन्ते" अहं पुरस्ताच्छोधयाम्यहं पुरतः शोधयामीत्यहमिकया उपतिष्ठते। ततोऽयं सोमः "अपः" वसतीवरीः "वृणानः" आच्छादयन् "पवते" पात्रेषु चरति कलशानभिगच्छति। कीदृशः? "कवीयान्" कविरिवाचरन्। यद्वा। कवयः स्तोतारः तानिच्छन्। तत्र दृष्टान्तः—"व्रजं न" "मन्म" मननीयं बोद्धव्यं रक्षितव्यं गवां गोष्ठं पशुवर्द्धनाय गोपालः परिगच्छति यथा तथा देवानां प्रीणनाय पात्राणि पवते॥

"सूर्ये"-"सूरे"—इति, "कवीयान्"—"कवीयन्"—इति च साम्न ऋचः पाठः॥ ७॥ ७३

* "घौरः"—इति ऋषि० मे०।

† शुम्भरति शुभ शोभायाम् (भ्वा०श०)—इत्यस्य रूपम्। विसर्गस्तु न दृश्यते मूले।

अथाष्टमी।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ २ ३ २ ३ १ २
इन्दुर्वाजीपवतेगोन्योघाइन्द्रेसोमःसहइन्वन्मदाय।

३ १ २ ३ १ २ ३ १र २र ३
हन्तिरक्षोबाधतेपर्यराति

१ २ ३ १ २ ३ १ २ ३ १ २
व*रिवस्कृ†ण्वन्वृजनस्यराजा॥ ८॥ ७४‡

(दाशस्पत्यानि चत्वारि॥) इन्दूर्वाजी २। पवतेगो-
नियोघाः। इन्द्राइसोर२३४माः। साहइन्वन्मदाया।
हन्ताइरा२३४क्षाः। बाधतेपर्यरातिम्। वराइवार२३४स्कृ।
ण्वन्वृजानार२३४स्या। रा२३जौवाओ२३४वा। हो५इ।
डा॥ २७॥

इन्दुर्वाजीपवतौ। हौहोवाहाइ। गोनियौघौ।
वांओर२३४वा। इन्द्रर२सोमा२ःसहइ। न्वान्मदायौ। वां-
ओर२३४वा। हन्तिरक्षोबाधतै। पार्यरातौ। वांओ-

* "वरातीवे"—इति, † "वरिवः:ख"—इति च क०।
‡ क०६,२,१०,१=क०७,४,१२,५=उत्त ३,१,१५—८,२,५।

५ १ २ १ २ १ ऽ २
२३४वा। वरिवस्कृण्वन्व्जना३। स्या। रा३जौवा-

५ ४
ओ२३४वा। हो५इ। डा ॥ २८ ॥

५ र र र र ४ ५ १र २
इन्दुरौहोवाहाइयावाजाउ। वा३। हाउवा।

र र १ २ २ १ २
पवतेगोनियोघाउ। वा३। हाउवा। इन्द्राइसोमः।

१ २ २ १ ३ ५र र
सहइन्वाउ। वा३। हाउवा३। मा२दार२३४औहोवा।

२ १ १ १ १ २ १ २ र १ २
या२४५। हन्ताइरक्षो। बाधानाइपाउ। वा३।

२ १ २ ५र र ३ १ १ १ १ २ २
हाउवा३। यी२रार२३४औहोवा। ती२३४५म्। वरा-

२ १ २ २ १
इवस्कृ। णवन्व्जनाउ। वा३। हाउवा३। स्यार-

३ ५र र २ १ ५ १ १
रार२३४औहोवा। जा२३४५॥ २९ ॥

५ र र र र ४ ५ र र
इन्दुर्वाजीपवतेगोनियोघाः। इन्द्रे सोमःसहइन्वन्म-

४ ५ ३र र र ४ ५
दाया। हन्तिरक्षोबाधतेपर्यरातीम्। वरिवस्कृण्वन्व्ज-

४ ५ २र १ ५र र २ १ १र ३ १ १ १ १ १

नश्वराजा। राजा३४औहोवा। ए३। स्वराजा२३४५

॥ ३० ॥ ७४

॥ इति ग्रामे गेये पञ्चदशः प्रपाठकः ॥

मन्युर्वासिष्ठ ऋषिः। "इन्दुः" क्षरणशीलः* "वाजी" बलवान् "गोन्योघाः" गमनशील-गीर्वीनाग्र-रससङ्घातः† "इन्द्रे" "सहः" बलकरं रसम् "इन्वन्" प्रेरयन्‡ "सोमः" "मदाय" तस्य मदार्थं "पवते" क्षरति। किञ्च। "रक्षः" रक्षःकुलं "हन्ति" हिनस्ति। किञ्च। "अरातीः" अरातीन्¶ शत्रून् "परिबाधते" परितः संहरति। कीदृशः? "वरिवः" वरणीयं धनं "कृण्वन्" स्तोतॄणां कुर्वन् "वृजनस्य" बलस्य§ "राजा" ईश्वरः|| सोम इति ॥ ८ ॥ ७४

---

* अतएव "इन्दुः"—इति उदकनामसु दृश्यते च (नै०१,१२,८२) "उन्देरिचादेः—(उ,१)"—इत्युणादेरिन्दुरिति।

† गो—गमनशीलः, गी—गीर्विनः, (मद्य अपि विद्यमानः) ओघः—रससङ्घातः। "गोणी"-शब्दो गमनशीलार्थेऽपभ्रंश इत्युदाहार च प्रथमे पतञ्जलिः।

‡ "इन्वति"—इति गतिकर्मसु पञ्चदशाधिकशततमं नैघण्टुकम् २,१४।

¶ भाष्यकारस्त्वत्र ऋग्वेदीयपाठमनुसृत्य व्याचख्यौ, सामवेदीयपाठस्तु "अरातिम्"—इति।

§ "वृजनम्"—इति बलनामसु एकविंशतितमं नैघण्टुकम् २,९।

|| "राजति"—इति ऐश्वर्यकर्मसु चतुर्थं नैघण्टुकम् २,२१।

अथ नवमी।

१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अयापवापवस्वैनावसूनिमां(ं)श्चत्व इन्दोसरसिप्रधन्व।
३ २ ३ १ २ ३ २ ३ १ २
ब्रध्नश्चिद्यस्यवातोनजूतिं
२ ३१ २ ३ १ २ ३ १ २
पुरुमेधाश्चि*त्तकवेनरन्धात् ॥ ९ ॥ ७५ †

(औष्ठानि त्रीणि ॥) औहोवाइ। पवोवाइ।
१ र २ र २ १ २ २ २
पवापवस्वैनावसू२३नी। औ३होइ। इडा। ई३या।
र १ र २ १ २ १ २
मांश्चत्वइन्दोसरसिप्रधा२३न्व। औरहोइ। इडा।
२ १ र र २ १ २ २
ई३या। ब्रध्नश्चिद्यस्यवातोनजू२३तीम्। औ३होइ। इडा।
२ १र र र २ १ २ २
ई३या। पुरुमेधाश्चित्तकवेनरा२३न्धात्। औ३होइ।
२ २ ३ ५र र २ १र२ १
इडा। ई२। या२३४। औहोवा। ए३। दीदिही२ ॥
॥ १ ॥

५ ४ ५ ४ ५ १ र २ ३ १ २ र
अयोवाइ। पवोवाइ। पवस्वैनावसू२३नी। इडा

* "पुरुमेधश्चि"—इति क०।

† उ०४,१,११,१ = ऋ०७,४,११,१ = अपे १,१,१०—८,१,१०—११,१,१।

५ १ २ १ २ २१ २
इया३ । ई३या । माꣳश्चत्वइन्दोसरसिप्रधा२३न्वा । इ

२ ५ १ १ २२ ११ २
होइया३ । ई३या । ब्रध्नश्चिद्यस्यवातोनजू२३तीम् ।

२ ५ १ १२२ २११ २
इहोइया३ । ई३या । पुरुमेधाश्चित्तकवेनरा२३न्धात् ।

२ १ २ ५२ २ २ २२
इहोइया३ । ई२ । या२३४ । औहोवा । ए३ । ही

१ ११११
द्या२३४५त् ॥ २ ॥

२ २ ५ २ १ ५ २ १२
हाओ२३४वा । २ । हा३ओ२३४वा । हाउवा । अया-

२१२२ २ १२ २२ १२ १ ११ १२
पवापवस्वैनावसूनि । इहइ । हिया२ । इहा । इहा ।

२ १ २२१ २११ १२ १ १२
माꣳश्चत्वइन्दोसरसिप्रधन्व । इहइ । हिया२ । इहा ।

१२ १२ १ २ १२२२ १ २२१ २ १
इहा । ब्रध्नश्चिद्यस्यवातोनजूतिम् । इहइ । हिया२ ।

१२ १२ २ २ ५ २ १ ५
इहा । इहा३ । हाओ२३४वा । २ । हा३ओ२३४वा ।

२ १२२२ १ २२१ २२ १२ १
हाउवा । पुरुमेधाश्चित्तकवेनरन्धात् । इहइ । हिया

१ २ १२ ११११
२ । इहा । इहा२३४५ ॥ ३ ॥ ७५

कुत्सऋषिः* । हे सोम ! "अया" अनया "पवा" पवमानया धारया सह "एना" एनानि "वसूनि" धनानि "पवस्व" क्षर [पवा—पूञ् पवने (क्र्या० उ०) "अन्येभ्योपि दृश्यन्ते (३,२,१०१)"—इति विन् प्रत्ययः । आर्धधातुकलक्षणो गुणः । "सावेकाचः (६,१,१६८)"—इति तृतीयाया उदात्तत्वम्] । तथा हे "इन्दो"! त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके† वसतीवर्य्याख्ये कलशे "प्रधन्व" प्रगच्छ‡ । ततः "यस्य" यं "ब्रध्नश्चित्" सर्वेषां प्रज्ञापकः मूलभूतो वा आदित्यः¶ "वातो न" वात इव "जूतिं" वेगं§ कुर्वन् । किञ्च । "पुरुमेधाश्चित्" बहुविधप्रज्ञ इन्द्रश्च "तकवे" [तकतिर्गतिकर्म्मसु पठितः॥ । अस्मादौणादिक उन् प्रत्ययः यस्येति (२,३,३७) कर्मणि षष्ठी ॥ "न लोकाव्ययेति (२, ३, ६९) षष्ठी-प्रतिषेधश्छान्दसः] सोम मभि गच्छता मित्यर्थः ॥

"यस्य"-"यच"—इति, "जूतिं"—"जूतः"-इति,—"नरश्यात्"-"नरन्दात्"—-इति च साम्न ऋचः क्रमेण पाठाः ॥ ९ ॥ ७५

* "आङ्गिरसः"—इति ऋषि-नै० ।

† "सरः"—इत्युदकनामसु पठितं पदम् नै० १,१२ ।

‡ "धन्वति"—इति गतिकर्मसु चतुःषष्ठितमं पठितम् २,१४ ।

¶ 'ब्रध्नः महान्, सविता वा महान् वा'—इति वि० ।

§ अवतेर्वेगकर्मणः ऊतिजूतीत्यादिना (३,३,९७) निपातनात् जूतिरिति ।

|| नि० नै० २,१४,९८ ।

अथ दशमी।

२ १र　२र　३ १ २ ३ २ १र　२र　३ १
महत्तत्सोमोमहिषश्चकारापांयद्गर्भोऽवृणीतदेवान्।
१ २ ३　२ ३ १ २　३ १र
अदधादिन्द्रे पवमानओजो
२र　३ १ २ ३　३ १ २
जनयत्सूर्येज्योतिरिन्दुः॥ १० ॥ ७६*

२　२ र　१　र
(आत्रम्॥) महत्तत्सोमोमहिषश्चा३कारा२। अपां
र र १　र र र १
यद्गर्भोऽवृणीता३दा३इवा२न्। अदधादिन्द्रे पवमाना३ओ
र ५र १　१　२
जा२ः। अजनयत्सूर्ये३ज्योर२३। तिरिन्द्राउवा३। ए३।
१ २ १र १र १र २ १　१ १ १ १
अजनयत्सूर्येज्योतिरि। दू२३४५ः॥ ४ ॥ ७६

"पराशरऋषिः†। "महिषः" महान्‡ पूज्यो वा "सोमः" "महत्" प्रभूतं¶ "तत्" कर्म "चकार" अकरोत्। किं तत्?

* उ० ५,२,१,२ = छ० ७,४,१९,१ = ऋवे १०,२,१—२२,२,५—२२,१,८—२२, २,९ = अथ० ६, २,५।

† "शाक्त्यः"—इति ऋषि-मै०।

‡ यथाह यास्कः—'महत्तत्सोमोमहिषश्चकारापां यद्गर्भोऽवृणीत देवानामधिपत्य मदधादिन्द्रे पवमान ओजो ऽजनयत् सूर्ये ज्योतिरिन्दुरादित्य इन्दु राजा'—इति नि०प०२,१७।

¶ 'महत् बहुलायम्'—इति वि०।

अथैकादशी।

१ २ ३ २ ३ २ ३ २३ २ ३ २ ३ १ २ ३ १ २ ३ २

असर्जिवक्कारथ्येयथाजौधियांमनोताप्रथमामनीषा।

३ १ २ ३ २ ३ १ २

दशस्वसारोऽअधिसानो

१ २ ३ २ ३ २३ १२३१२

अव्येऽम्टजन्ति*वह्निᳪसदनेष्वच्छ॥ ११ ॥ ७७ †

"अपाङ्गर्भः" उदकानां गर्भभूतः‡ जनयितृत्वाज्जन्यत्वाद्वा। स सोमः "देवान्¶" "अवृणीत"§ समभजतेति "यत्" तत् कृतवानिति। किञ्च। "पवमानः" पूयमानः॥ सोमः "ओजः"+ सोमपानजन्यं बलम् "इन्द्रे"÷ "अदधात्" न्यधात् तथा "इन्दुः" सोमः× "सूर्ये"** "ज्योतिः" तेजः†† अजनयत्‡‡ ॥ १० ॥ ७६

---

* "अव्येषञ्जन्ति"—इति ऋ०।

† ऋ० ७,४,१,१=आरण्ये १,२,२१।

‡ 'अपां यद् गर्भदर्शनमात्रं पञ्चानां भूतानां गर्भः'—इति वि०।

¶ 'इन्द्रियाणि'—इति वि०।

§ 'अवृणीत अधिष्ठितवान्'—इति वि०।

|| 'पूयमानः विषयप्रमाणेन'—इति वि०।

+ 'ओजः बल महिमादि'—इति वि०।

÷ 'इन्द्रे आत्मनि'—इति वि०।

× 'ज्योतिरिन्दुरादित्यः अध्यात्मम्'—इति वि०।

** 'सूर्ये सरथगीते'—इति वि०।

†† 'तेजः इन्द्रः'—इति वि०।

‡‡ 'तथाचोक्तः—येन सूर्यस्तपति'—इति वि०।

१ १ २ २ १ १
(वासिष्ठम् ॥) असाव्यौ३हो । जिवाका२ । रथ्या
२ ५र ३ १ १ १ १ २ १ २ २ १
इया३४ । था । जा२३४५उ । धियाव्यौ३हो । मनो-
१ २ ५र ३ १ १ १ १ २ १ २ २
ता२ । प्रथमामा३४ । नौ । षा२३४५ । इव्याव्यौ३हो ।
१ १ २ ५ ३ १ १ १ १ १ १
स्वसारा२ः । अधिसानो३४ । ष । व्या२३४५इ । म्रजा
२ २ १ १ २ ५
व्यौ३हो । तिवाको२म् । सदनाइषु३४ । यच्छा२उ ।
१ १ १
वा३४५ ॥ ५ ॥ ७७

काश्यपऋषिः* । "वका" यन्ध्रायमाणः [वच परिभाषणे (अदा०प०) वनिप्] तादृशः पवमानः सोमः "आजौ" अजन्ति कर्मार्थं ऋत्विज इति आजिर्यज्ञः तस्मिन् "धिया" कर्मणा स्तोत्रेण या† साकम् "असर्जि" पात्रेषु सृज्यते‡ । तत्र दृष्टान्तः । "रथ्ये यथा" रथ्ये रथार्हे [आजौ सङ्ग्रामनामैतत्¶ । अजन्ति प्रक्षिपन्त्यायुधान्यत्रेति तस्मिन्] अश्वो यथा सृज्यते तद्वत् । कीदृशः ? "मनोता" यस्यां देवानां मनांसि प्रोतानि सा [तथाच ब्राह्मणम्—"तस्यां हि तेषां मनांसि ओतानि"—इति ] "प्रथमा"

* "मारीचः"—इति ऋषि-नि० ।
† 'धिया प्रज्ञया कर्मणा वा'—इति वि० ।
‡ 'सृज्यताम्'—इति वि० ।
¶ नि० नै० २,१७,८ ।

अथ द्वादशी।

२२ ३१२३ २ ३१ २ ३ १२३१२ ३२३ १ २
अपामिवेदूर्मयस्ततुराणाःप्रमनीषाईरतेसोममच्छ।
३ २३ १ २३२ ३१२
नमस्यन्तीरुपचयन्तिसञ्चा
२र ३२३१२
चविशन्त्युशतीरुशन्तम्॥१२॥७८*

॥ पञ्चमदशति ॥ ॥ अर्द्धः प्रपाठकः ॥

५ ४र ५ ४र५र ४ ५ ४र
( अपाञ्च साम ॥ ) अपामिवेदूर्मयस्तौ। होवा।
५ २१२ २र २ १ २र १ २र
हाइ। तुराणा२३४ः। हाहोइ। प्रमनी। षाः। ईर-

मुख्या "मनीषा" मनस ईषा मनीषा स्तुतिः तद्वान्। यद्वा। धिया विदधाति स्तुतीरिति धीः स्तोता तेन स्तुतिः प्रेर्यते। किञ्च। "दश स्वसारः" दशसङ्ख्याका अङ्गुलयः† "सदनेषु" यज्ञगृहेषु पाषाणेष्वभिमुखीकृत्य "वह्निं" वोढारं सोमं "सानो" समुच्छ्रिते [अधिः सप्तम्यर्थानुवादकः] "अव्ये" अविभवे अविबालेन कृते पवित्रे "अज्जन्ति" प्रेरयन्ति‡॥

"प्रथमा मनीषा"—"प्रथमो मनीषी"—इति, "सदनेषु"—"सदनानि"—इति च साम्न ऋचः पाठः॥११॥७७

* ऋ० ७,४,५,२।

† "स्वसारः"—इति अङ्गुलिनामसु पठितं नैघण्टुकम् २,५।

‡ "अज्जन्ति"—इति तु ऋग्वेदीयः पाठः, तमेवानामवलम्बितं सायणेन। सामवेदीयपाठस्तु "स्वजन्ति"—इति; अतएव 'स्वजन्ति शोधयन्ति'-इति वि०।

२  ३  ५  २  ३ र १  १
तेर। सोमम। च्छा३४। चाहोइ। नमस्य। ताइः।
२  २ ३ ५  २  ३र २  १ २
उपचा३। यन्तिसम। चा३४। चाहोइ। याचवि।
१  २ ३  २ ३ ५  २  ३र २  ५र
शा। तियुश। तोहुश। ता३४म। चाहा३४। औ
र  २ १ १११
होवा। वा३हा२३४५ः॥ ६॥ ७८

प्रस्कण्वऋषिः*। "अपामिव" यथा उदकानाम् "ऊर्मयः" त्वरन्ते। "इत्"—इति पूरणः। तद्वत् "तर्तुराणाः" कर्मणि देवान् स्तोतुन्त्वरमाणाः। [तुर त्वरणे जौहोत्यादिकः (धा०)। यङ्लुगन्तस्य शानचि रूपम्। अभ्यासस्य उवर्णस्य रेफादेशश्छान्दसः। अभ्यस्तस्वरः†। तादृशा ऋत्विजः "मनीषाः" मनस ईशित्रीः स्तुतीः "सोममच्छ" सोमं प्रति प्रेरयन्ति। "नमस्यन्तीः" नमस्यन्त्यः सोमं योजयन्त्यः सत्यः तम् "उपयन्ति" च। उप समीपे गच्छन्ति। तमेव "संयन्ति च" सङ्गच्छन्ते। "[च वा योगे प्रथमा (८,१,५९)—इति न निघातः] "उशतीः" कामयमानाः स्तुतयः "उशन्तं" कामयमानं सोमम् "आविशन्ति च" प्रविशन्ति च॥ १२॥ ७८

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य सप्तमः खण्डः॥

॥ इति त्रैष्टुभम्॥

* "काण्वः"—इति ऋचि-गे०।

† "अभ्यस्तानामादिः (६,१,१८९)"—इति पा०।

पुरोजितीति-मुख्यास्तु नवर्चो बृहतीत्यसौ—
"आहर्यतायधृष्णवे" शिष्टा अनुष्टुभः स्मृताः* ॥
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे † ॥

तत्राष्टमे खण्डे—

सैषा प्रथमा।

२१ २ ३ १ २ ३ १ २ . ३ १ २
पुरोजितीवो अन्धसः सुताय मादयित्नवे।
३ १ २ ३ १ २ ३क २र
अपश्वानꣳश्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥ ७९

५ र २ २ ५ २
(प्रक्वौ द्वौ ॥) पुरोजितौ। वाअन्धार२३४साः। सु-
१र २ ५ १
तायामाऽ२दया३१उवायेऽ३। त्ना२३४वे। अपश्वाना२ꣳ

---

* पुरोजितीतिमुख्याः 'पुरोजितीवोअन्धसः'-इतिप्रभृतयः नव ऋचः, अष्टमे-खण्डे सूयन्त इति शेषः। तत्र आहर्यतायेति सप्तमी ऋक् बृहतीच्छन्दस्का, शिष्टाः अष्टौ अनुष्टुप्छन्दस्का इत्यर्थः।

† 'विनियोगस्त्वासां ज्योतिष्टोमे'—इति वि०।

‡ ऊ० १,१,१८,१ = ऊ० ७,५,१,१ = आरण्ये १,२,११ = जटे १,१,११—१,१,१२—२,२,१८—४,१,१३—४,१,१४—६,२,९—७,२,१० —८,२,१५—८,२,१६—८, २,१७—१०,१,३—१०,१,१७—१२,१,६—१२,२,११—१२,२,१२—१२,२,१३—१२,२,१४—१३, १,६—१३,२,६—१६,१,२—१६,१,८—१६,१,९—१६,२,६—१७,१,३—१७,१,४—१७, १,१७—२०,१,१८—२०,२,१२—२०,२,१३—(२१,२,१)—२१,३,२— २२,१,६—२२,१, ७—२२,१,९—२२,२,१३—२२,२,१५—२२,१,९ = ऊहे २,१,१—२,१,१८—२,२,२—२,२,५—३,१,१—३,१,१९—३,२,२—४,१,८—४,२,५—४,२,८—४,२,१४— ४,२,१६—(५,१,८—५,१,१२)—५,२,१४—६,१,११।

२　　　５　　१ र

अथा३१उवाये२। ष्ठा२३४ना। सखायोदी२र्घजा३१

२　　५

वाये३। क्षी२३४याम् ॥ ७ ॥

५र　　२ १ २ १　　१ २र

पुरोजिती। वो३ओन्धा३साः। स्रतायमा२। ऊ२।

१ २ १　　१ २र

ह्वा२इ। ओ२। दा३याइत्ना३वे। आपश्वाना२म्।

१　　१ २ २　　१ २र

ऊ२। ह्वा२इ। ऊ२। आ३याइष्टा३ता। माखा

र　　　१　　१ ३

योदा२इ। ऊ२। ह्वा२इ। ऊ२३। घा२जा२३४

५र र　　१　　१　　१ १ १ १

औहोवा। ए३। क्षिया२३४५म् ॥ ८ ॥

५र र　　３　　५　　२र

(कार्त्तयशम् ॥) पुरोह्वाह्वाउ। जा२३४इती। वो

१ २ १　　४ ५　　२ १ २ १　　४ ५

आ औ३हो३। धासाः। सुताऔ३हो३। यामा६।

५　　२　१ ५र　　१ २　　१ र　　१ २

हाउवा। दयित्नवे२। उपा। आपश्वान७अथा१इष्टा

२　　१ २ २　　४ ५　　५　　२

इना। सखाऔ३हो३। योदा६। हाउवा। घजि

१　　२ १ १ १ १

क्षियम्। उपा२३४५ ॥ ९ ॥

(औहूं सझनम् ॥) पुरोजितीवोअन्धसः। ओवा-

हाइ। सुतायमादयित्नवओवा२३होइ। अपश्वान९

अथिष्टनओवा२३होइ। साखायोदाइ। घाजिक्का२३

४५याइ५६म्। सुवृक्तिभिर्नृ मादनओरे२षुवा१ ॥ १० ॥

(श्यावाश्वम् ॥) पुरो३१। जी३ती। वोअ। धा

३सः। एहिया। सू। तायमादा। यि। त्नवा२इ।

एहिया२। अपश्वान९आ३थी३। ष्टा२३४ना। एहा

२इ। एहिया२। सखायोदाइघा३जी३। क्का३४५यो।

६हाइ ॥ ११ ॥

(आन्धीगवम् ॥) पुरोजितीवो४न्धासाः। सुताय।

मादा२३या। ऊम्मा२१५२। त्नवेअपश्वान९अथिष्टन।

साखा३उवा। यो२दो। घा२३जी। क्कियाम्। औ

२३होवा। हो५इ। डा ॥ १२ ॥ ७९

अथ द्वितीया।

२ ३ १ २ ३ २उ ३ १ २ ३ १ २
अयम्पूषारयिर्भगःसोमःपुनानोअर्षति।

२ १ २ ३ १ २३क १र २ १ २ ३ २
पतिर्विश्वस्यभूमनोव्यख्यद्रोदसीउभे ॥ २ ॥ ८०*

श्यावाश्वऋषिः†। हे "सखायः" सखिभूताः समानख्याना वा हे स्तोतारः! "वः" यूयं "पुरोजिती" [षष्ठ्याः पूर्व्वसवर्ण-दीर्घः‡] पुरः-स्थित-जयस्य "अन्धसः" मदनीयस्य सोमस्य स्व-भूताय "सुताय" अभिषुताय "मादयिष्णवे" अत्यन्तं मदकराय रसाय "दीर्घजिह्व्य" [दीर्घा जिह्वा यस्य स दीर्घजिह्वी "दीर्घ-जिह्वी च छन्दसि (४,१,५९)—इति "ङीषन्तत्वेन" निपातितः। तादृशं] "श्वानं" च "अपश्नथिष्टन" अपश्नथयत¶ अपबाधध्वम्। यथा श्वा राक्षसा वा "सुतं" सोमं न लिहन्ति तथा कुरु-तेत्यर्थः॥ १ ॥ ७९

---

* उ० ९,१,११,१ = ऋ० ७,४,२,१=आरण्ये १,१,८—१,२,१७—१,२,१८—१,१,१९ ऊहे१,२,८—२,२,९— ७,१,९—११,२,१०—११,१,१०—१२,१,१—१५,१,११—१५,१, १४—१५,१,१७—२०,१,५—२०,२,१८—२२,२,९=ऊह्ये२,१,६—२,१,८—३,१,११—२, २,११—५,२,९—६,१,८।

† 'श्यावीगुः श्यावाश्वः'—इति ऋषि·नै०।

‡ सुपांसुलुगित्यादिना (७,१,३९)।

¶ 'शिथिलीकरोतु'—इति वि०।

२ १२२ १२१ २१
(क्रौञ्चानि चीणि ॥) अयम्पूषौहो। रयिर्भगाः। सो

१ २ ३ २ १२ १२
मःपुनाइ। नोषार्षापुनाई५६इ। पतिर्विश्वौहो। स्या-

१२ १ १ १ ३
भूमनाः। वियख्यद्रोइ। दासीइऊ५भाई५६इ॥ १३ ॥

३ २ २ २ १ १२ १
अयम्पूषा। अयम्पूषा। रयिर्भगाः। सोमःपूना

२ १ २ १ १ १
२। नोषर्षताइ। पतिर्वाइश्वा२। ओस्याभू१माना२ः।

१ १ १ २ १ १
ओइवियख्या२३द्रो। दासीउभ। इडा२३भा३४३।

१
ओ२३४५इ। डा॥ १४ ॥

४ २४२५२ २ २४ ५ ५ १ १
अयम्पूषा। हो। रयिर्भगाईए। सोमा२ःपुना२।

२१ २ ५ १ ११२ २ १
नषा३४५। षा२३४ती। पतिर्विश्वस्यभूमनः। विय-

१ १२ २ १
ख्या२३द्रो। दसीउर२भा३४३इ। ओ२३४५इ। डा॥

॥ १५ ॥ ८०

१ १२१ १ १ १ १ १२र
३। ए३। चरत्ना। दाइवान्गच्छा३न्तुवा३ः। ए३। मदा-
२
आ॥ १६॥

५ ४र ५र ४ ५ ४ १
(ऊर्द्धं इत्वाष्ट्री॥) सुतासोमधुमत्तमाः। सोमा२
१ २१ १ ५ ११ २र
इन्द्रा२। यमा३४५। दी२३४नाः। पवित्रवन्तोअक्ष-
३र र २ १ ११र २ १
रन्। देवान्गच्छा। तुवोमा२३दा३४३ः। ओ२३४५
इ। डा॥ १७॥

५ ४र ५र ४ ५ र ४र ५
(वासिष्ठम्॥) सुतासोमधुमत्तमाः। सोमाइन्द्रा।
२ १ ० १र १ १ र
यमन्दिनः। पाविचावा२। तोअक्षरन्। दाइवान्
२ २ ५ २१ २ ४५ ४
गच्छौवा। तू२३४वाः। मदा। औ३होवा। होपुइ।
डा॥ १८॥

५ ४र ५र ४ ५ र ४र
(आध्कारणिधनं त्वाष्ट्री॥) सुतासोमधुमत्तमाः। सो
५ २ ५र १ ७ ११ १ ७
माहाउ। इन्द्रा३यामन्दिना२ः। इन्द्रा३हो। यमा२

२ ५ २ १ ० २ २ १
दा२३४इना: । पविचवा३न्तोऋचारा२न् । चवा३चो ।
० २ ५ २र र १ १ २र २
तो२चा२३४रान् । देवान्गच्छा३न्तूवो१मादा२: । देवा
१ २ ५ १ २ ५र र २
३न्चोइ । गच्छो२३४चा । तू२वा२३४औचोवा । मदा-
१ १ १ १ १
३ऋा२३४५ ॥ १९ ॥

५ र र ५ २र र
(वासिष्ठम् ॥) सुतासोमधुमत्तमा६ए । सोमाइ
३र १ ० १ १ ०
न्द्रा३यामन्दिना२: । दाइना२: । पविचवा३न्तोऋचा-
१ रर १ १
रा२न् । श्चारा२न् । देवान्गच्छा३न्तूवो१मादा२:।
१ २र २ १ २ ५ १ २ ५र
मादा२: । देवा३न्चोइ । गच्छा२३४चा । तू२वा२३४औ
र २ १ १ १ १ १
चोवा । मदा३ई२३४५ ॥ २० ॥

१ र र २ २ ३ १ १
(खारत्वाष्ट्री ॥) सुतासोमा३चा । धुमत्तामा२: ।
१र र २ २ ३ १ १ १ २ २ ३र
सोमाइन्द्रा३चा । यमन्दाइना२: । पविचवा३चा । ता-
१ १ १र र २ २ ३ ० १ ५
ऋचारा२न् । देवान्गच्छा३चा । तुवो३चो२३४ । वा ।
५ ५
मा५दो६चाइ ॥ २१ ॥

५ र १र २ २ २
(हिरण्यसत्वाद्रौ॥) सुता। सोमा३। हाउवा।
२ २ १ र ५र १२ १ २ १२
धुमत्तमार२३४ः। सोमाः। इन्द्रा३। हाउवा। यम
१ ५ १२ १ २ १र २१
न्दाइनार२३४ः। पवि। त्रवा३। हाउवा। तेऽग्रच्छ
र ५र १२ २ १ १२ १
रार२३४न्। देवान्। गच्छा३। हाउवा। तुवोउवार
५ ४ ५
३४। वा। माधुदोद्दवाइ॥२२॥

५र १ ४ ५४ ५ १र १र
(वासिष्ठम्॥) सुतासोउमाधुमत्तमाः। सोमा
२१ १ १ १ १ ५ २ र
इन्द्रा। यमन्दिनः। पावाओर२३४वा। त्रवन्त। त्रचरन्।
१र र १ १ ११र २ १
देवान् गच्छ। तुवोमार२दा३४३ः। ओर२३४५इ। डा॥
॥२३॥ ८१

ययातिर्नाहुषऋषिः*। "मधुमत्तमाः" अतिशयेन माधुर्यो-
पेताः अतएव "मन्दिनः" मदकराः "सुतासः" अभिषुताः सोमाः
"पवित्रवन्तः"† पवित्रे वर्त्तमानाः सन्तः "इन्द्रस्य" इन्द्रस्य
"चरन्" पात्रे षु चरन्ति। अथ प्रत्यक्षस्तुतिः। "वः" युष्माकं

* 'विनियोगोऽस्य तृतीयेऽहनि'—इति वि०।

† 'दशापवित्रात्माः'—इति वि०।

अथ चतुर्थी ।

१ २　　 ३ १ २ ३ २ ३ २　 ३ १ २
सोमाःपवन्तइन्दवोस्मभ्यङ्गातुवित्तमाः।
३ २　 ३　 १ २ ३ १ २ ३ २क ३र　 ३ १ २
मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः॥४॥८२०*

४　　 ५　　 २　　 १ ० २
(कौत्से द्वे॥) हाउसोमाः। पवाइन्ताइन्दावाउ।
२　　 १　 १　 ० २　　 २
वाइ। हाउवा। अस्माभ्यङ्गातूवित्तामाउ। वाइ। हा
१र　 र र　 २　 २　　 २
उवा। मित्राः स्वानाआरे१पासाउ। वाइ। हाउवा
१र　 २ १　　 १　 ४　　 २　　 ५
३४। सुवा। धियाइः। स्वर३वाइः। वा३४५इदोईडा
इ॥२४॥

५र र　 २ २ ३ ४ ५　　 २ १ २ १　　 २ ३ २ १
सोमाः पवन्तइन्दवाः। अस्माभ्यङ्गा। तुवित्तमाः।
२　 ३　　 ५　　 २र १र　 २र १ १　　 १ र २ १　　 १ १
माइत्राओ२३४वा। स्वानाअरेपसः। सुवाधिआः। सुव
२　　　 १
र्वारइदा३४३ः। ओ२३४५इ। डा॥२५॥८२

"मदाः" मद-हेतवो रसाः "देवान्" इन्द्रादीन्† "गच्छन्तु" ॥
॥२॥८१

* ऊ० ४,१,१०,१—आ० ०,५,१,५ = ऊहे ३,२,१२—३,२,१४—३,२,१५—३,२,१६—१५,२,१६—१५,२,१७—१५,२,१८—१६,१,१—११,१,१४ = ऊह्ये ६,१,१०।

† 'यज्ञादीन्'—इति वि०।

अथ पञ्चमी।

२ १ २ ३ १ २ ३ १ २ ३ १ २
अभीनोवाजसातमꣳरयिमर्षशतस्पृहम्।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
इन्दोसहस्रभर्णसन्तुविद्युम्नंविभासहम्॥ ५॥ ८३*

५ र २ १ २
( सोमसामानि त्रीणि॥ ) अभीनोवा। जा२सा२३
५ र २ १ ५ २ १ २ १ २ १ र
४औहोवा। ता२३४माम्। रयिमरिशतस्पृहम्। इन्दो

मनुः सांवरणऋषिः। "गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः[†] "इन्दवः" दीप्ताः[‡] सोमाः "पवन्ते" अस्मभ्यं मदर्थं "चरन्ति" आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः "स्वानाः" अभिषूयमाणाः "अरेपसः" पापरहिताः अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ४॥ ८२

---

* उ० ५,१,१६,१ = ऋ० ७,४,२१,१ = जर्ष ५,१,३—४,१,४—५,१,५ — ५,१,६—५,१,७—५,१,८—११,१,१५—११,१,१६—१७,१,१२—१७,१,१३—१७,१,१४—१७,१,१९—१८,१,१०—१९,१,२—१९,१,८।

† "गातुः"—इति पृथिवी-नामसु विंशतितमं नैघण्टुकम् १,१। किञ्च निरुक्त-चतुर्थे—"गातुं यज्ञाय गातुं यज्ञपतये इत्यपि निगमो भवति। गमनं यज्ञाय गमनं यज्ञपतये"—इति च यास्कः।

‡ 'ज्योतिरिन्दुः'—इत्यादि नि० नै० प० १,१७।

१ ० १ १ २
सत्त्वभा२३श्वो । णासा२म् । तुविद्युम्न विभा२३होयि

२ २
३ । सत्त्वमो२३४५इ । डा ॥ २६ ॥

५ र २ १ र २ १ र
अभीनोवा । जासातमम् । रयिम । षाउवा२३ ।

१ २ २ १ २ १ २र १
होवा३हाइ । शतस्पृहम् । इन्दा२स । हाउवा२३ ।

१ २ २ १ २ १ २ ५र र
होवा३हा । सभर्णसम् । तुवाये३ । द्यू२म्ना२३४औहो

२र १ २ १ १ १ १
वा । विभासहा२३४५म् ॥ २७ ॥

२ १ २र र ४ २ २ ५
अभी२होइ । नोवाजा३सा३ । होता२३४माम् ।

२ १ २ ४ २ २ ५ २
रयी२होइ । मर्षशा३ता३ । हास्पृ२३४हाम् । इ

१ २ ४ २ २ ५ २
न्दो२होइ । सहस्रा३भा३ । हार्णा२३४साम् । तुवा

१ २ ४ २ ४
२होइ । द्युम्न वी३भा३ । हा३सा५हा६५६म् ॥ २८ ॥

२ १ २ ५र २ १
(क्रौञ्चम् ॥) अभीनोवा३१२३४ । जसा । तमा३

२ १ २ ५ २ २ २ १
म् । रयिमर्षा३१२२४ । शत । स्पृहा३म् । इन्दो

२१ ख,

१ ५ ३ १ २ १ २
साहा३१२३४। स्रभ। णसा३म्। तुषाइद्यूम्ना३१२३

४
म्। विभापूसहाउ। वा॥ २९॥

४ २ २ २ २ ४
(सोमसाम॥) अभीनोवौहोपूजसातमाम्। रयि

२ ४ २ २ ४
मर्षौहोपूशतस्पृहाम्। इन्दोसहौहोपूस्रभर्णसाम्।

२ २ ४ ५ ४ ५
तुविद्युम्नौहोपूविभासहाम्। सहम्। तुविद्युम्नंविभाई।

५ २ ११११
हाउवा। सहा३मे२३४५॥ ३०॥ ८३

अम्बरीषऋजिश्वानौ* ह्यादृषी। हे "इन्दो" दीप्यमान सोम! "वाजसातमम्" अत्यन्तं बलप्रद मन्नप्रदं वा धनं पुत्रं "नः" अस्माकम् "अभ्यर्ष" अभिगमय†। कीदृशम्? "शतस्पृहं" बहुभिः स्पृहणीयम्। "सहस्रभर्णसं" बहुविधभरणम् अनेक-पोषण-युक्त मित्यर्थः। "तुविद्युम्नं" [द्युम्नं द्योततेर्यशो वान्नं वेति‡ यास्कः] बह्वन्नं बहुयशोयुक्तं वा। "विभासहं"¶ महतः प्रकाशस्याभिभवितारम् अतितेजस्विन मित्यर्थः॥

---

* "अम्बरीषः वार्षागिरः"—"ऋजिश्वा भारद्वाजः"—इति ऋषि-नि०।

† अर्षेति ऋषतेर्गति-कर्मणो रूपम् (२,१४)।

‡ "द्युम्नं द्योततेर्यशो वान्नं वा "अस्मे द्युम्न मधि रत्नञ्च धेहि" अस्मासु द्युम्नं च रत्नं च धेहि"—इति निरु० नै० ५,५।

¶ "विभासहः" शब्दोऽसौ एकवारमेव श्रूयते त्रिवेद-संहितास्विति ध्येयम्।

अथ षष्ठी।

२ १ २　३१२　२१र　२र३ १ २
अभीनवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम्।
२ ३उ　३ १र २र　३ १ २　३ १ २
वत्सन्न पूर्व आयुनि जातꣳ रिहन्ति मातरः॥ ६॥ ८४

(आङ्गिरसानि त्रीणि॥) आ२३४भी। ओइनवन्त
आइ१हा२ः। ओइप्रियमिन्द्रस्यकामा१या२म्। ओइ
वत्सन्नपूर्वआयू१नो२। ओइ। जातꣳरिहन्तिमो१२३
४। वा। तापूरोईहाइ॥ २१॥

अभो। नवो३२। तआ५द्रुहाः। प्रियामिन्द्रा३।
स्याकामा२३४याम्। वत्सन्नपू३। र्वाआयू२३४नो।
जाता३ꣳहाइ। रिहा३हो। तिमाता२३रा३४३ः। ओ
२३४५इ। डा॥ २२॥

"अतस्पृहं"–"पुरुस्पृहम्"—इति, "विभासहं"–"विभ्वासहम्"
—इति च साम्न ऋचः पाठः॥ ५॥ ८३

* ऋ० ७,४,२७,१ = आरण्ये १,२,२४—२,१,२—३,१,४—४,१,१२।

अथ सप्तमी।

१ २ ३ १ २ ३ २ २ १ २ ३ १ २
आ हर्यताय धृष्णवे धनुष्टन्वन्ति*पौꣳस्यम्।

२ ३उ ३ १ २ ३ १ २ ३ १२ ३२ ३ १ २
शुक्रा वियन्त्यसुराय निर्णिजे विपामग्रे महीयुवः॥ ७॥८५†

५ ४२ ५ २ ४ ५ ४ ५ ४ ५ ४२ ५
अभीनवन्ते अद्रुहः। ओहाइ। प्रियमिन्द्रस्यकामि

४ ५ ४ २ ५ ४२ ५ २ ४ ५
यम्। ओहाइ। वत्सन्नपूर्वआयुनि। औहोवाहा

१ २ २ ५ २ १ ५ ४
इ। जातꣳरिहौवा। तौर२३४मा। नरा। औ३हो

५ ४
वा। हो५इ। डा॥ २२॥ ८४

ऋभ-सूनू काश्यपौ हयोः‡। यथा "मातरः" गावः "पूर्वे" प्रथमे "आयुनि"¶ वयसि "जातं" वत्सं "रिहन्ति" लिहन्ति तथा "अद्रुहः" अद्रोहाः वसतीवर्याख्या आपः इन्द्रस्य "प्रियं" काम्यं सर्वैः काम्यमानं सोमम् "अभि नवन्ते"§ अभिगच्छन्ति॥

॥ ६॥ ८४

---

* "तनुवन्ति"—ऋ०।

† ऋ० ७,४,२५,१।

‡ अत्राः परस्पापेत्यर्थः। न चात्र मत्वाघटनम्।

¶ "आयवः"—इति मनुष्य-नामसु सप्तदशं नैघण्टुकम् (२,३)। इह तु तत्रैव जीवता वयोऽर्थता चेष्टा भगवतः सायणस्य।

§ "नवते"—इति गति-कर्मसु अष्टाविंशतितमं नैघण्टुकम् २,१४।

(गृत्समदस्य वृक्तानि चत्वारि ॥ ) भाहा३। घोर२३४वा। यंतायब्धावेर। धनूहः। घोर२३४वा। तन्वन्तिपौऽसियम्। ध्रुक्का३ः। ओर२३४वा। वियन्त्यस्तरायनिर्णिजेर। विमा३। ओर२३४वा। अग्नि२मग्नीयुवा२३४५ः॥ २४ ॥

हा३हाइ। भाहयंता। या२३४धृ। हा३हा३४। औहोवा। ब्धा२६४वे। हा३हाइ। धनूष्टान्वा। तीर२३४पी। हा३हा३४। औहोवा। सी२३४याम्। हा३हाइ। ध्रुक्काविय। ताअस्तुरा। या२३४नो। हा३हा३४। औहोवा। णीर२३४जे। हा३हाइ। विपामाग्नाई। मा२३४हो। हा३हा३४। औहोवा। यू२३४वाः॥ २५ ॥

४ ५ ३ र ५ ४ ५ ४ १ २ १
आहर्यताय धृष्णवआ। धनूष्टा१न्वा२। तिपौ९
२ १ र २ १ ७ २ १ १
सा१या२म्। ध्रुक्राविय। ताश्रस्तुरा३। यानीरर्णा२३४
५ १ २ १ ४
इजाइ। विपामा१ग्रा२इ। ओइ। मार३ह्यो३।
२ ५
यू३४५वो६हाइ ॥ २६ ॥

२ ५ २ ५ २ ४ ५ २
आ४हर्य। ता४यधृ। ष्णा३वेधनुष्टन्वा। तिंपौ
२ २ १ र २ १ ७ २ २ १
९सियाम्। ध्रुक्राविय। ताश्रस्तुरा। यनाउवा३।
५ १ २ २ १ २ १ १र
णो२३४जे। वाइपा२९हाइ। आग्रे३हाई। मह्रीयू
२ १
२३वा३४३ः। ओ२३४५इ। डा ॥ २७ ॥ ८५

"हर्य्यताय"* सर्वैः स्पृहणीयाय "धृष्णवे" शत्रूणां धर्षणशीलाय सोमाय "पौंस्यं" पुंस्त्वस्याभिव्यञ्जकं वरं "धनुरातन्वन्ति" धनूषि ज्यां कुर्वन्तीति सोमस्य धारा-विसर्गार्थं वितायमानं पवित्र मभिधीयते। तदेव विवृणोति—"विपां" मेधाविनां "अग्रे"† पुरस्तात् "मह्रीयुवः"‡ पूजाकामा अध्वर्यवः

* 'आहर्यतिः प्रेप्साकर्मः'—इति वि०।

† 'अग्रे प्रथमे'—इति वि०।

‡ 'मह्रत्सोमं मिश्रयन्ति रश्मयः उदकानि वा'—इति वि०।

अथाष्टमी ।

२ ३ १ २ ३ १र २र ३ १ २ ३ १ १
परित्यꣳहर्यतꣳहरिम्बभ्रुम्पुनन्तिवारेण ।
३ १उ २ १उ ३ १ २ ३ १र २र
योदेवान्विश्वाꣳइत्परिमदेनसहगच्छति ॥ ८ ॥ ८६*

२ ४ २ ४ २ ४ ५
( द्विरभ्यस्तमाकूपारम् ॥ ) परित्यꣳहर्यतꣳहरिम् ।
२ र ४ ३ ४ २
पा२३४ । रित्यꣳहौहोऽ५र्यतꣳहराइम् । बभ्रुम्पुनन्ति
र ४र ५ १ र र ४र ३र ४र
वारेण । वा२३४ । भ्रुम्पुनौहोऽ५न्तिवारेणा । यादे

"शुक्रा"† शुक्लवर्णानि गो-पयांसि "असुराय"‡ बलवते "निर्णिजे" स्वरूपाय शोधनार्थं "वयन्ति"¶ आच्छादयन्तीत्यर्थः ॥

"शुक्राावियन्त्यसुरायनिर्णिजे"-"शुक्रांवयन्त्यसुरायनिर्णिजम्" —इति साम्न ऋचः पाठौ ॥ ७ ॥ ८५

* उ० ५,२,१८,१—८,२,८,२ = ऋ०७,४,२४,१ = जहे५,१,१८—५,२,१९—५,२,२० —६,१,१—६,१,२,— ६,१,२—१२,२,१— १२,२,२—१४,२,१६—१४,२,१७—१४,२, १८—१४,२,१९—१४,२,२०—१४,२,२१ —१७,१,८—१७,१,९—१७,२,२—२०,२,४ = जह्य ४,२,२ ।

† 'शुक्राः शुभ्रवर्णाः'—इति वि० ।

‡ 'असुराय सुखाय वसुदानवते'—इति वि० ।

¶ वयन्तीति पाठस्तु ऋग्वेदीयः । तमेवावलम्ब्यात्र व्याख्यातं भगवता सायणेनेति बोध्यम् । सामवेदीय-पाठस्तु वियन्तीति ।

अथ नवमी।

१ २ ३ १२ २२ ३ २ ३ १ २ ३ १२ ३२

प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।

३ १ २ ३ १ २ ३ २ ३ १२ ३२

अपश्वानमराधसꣳहतामखन्नभृगवः॥ ९॥ ८७*

॥ प्रथम-दशति ॥

१२ ४२ ३ ४ ५ १ २ ३ २ २ ४

वान्विश्वाꣳइत्यरि। योऽ२३४। देवान्वौहोऽ५श्वाꣳइत्य

३ ४२ ३ ४ ५ १ २ २

राइ। मदेनसद्दगच्छति। माऽ२३४। देनसौहोऽ५ह-

४ ५

ग। च्छाऽ५तोई२ हाइ॥ ३८॥ ८६

ऋजिश्वाम्बरीषावृषी†। "हर्यतः" सर्वैः स्पृहणीयं "हरिं हरितवर्णं "बभ्रुं" बभ्रुवर्णं च "त्वं" तं सोमं "वारेण" वालेन पवित्रेण "परि‡ पुनन्ति" परिशोधयन्ति। "यः" सोमः "विश्वान्" सर्वानिन्द्रादीन् "देवानित्" देवानेव "मदेन" मदकरेण रसेन सह "परि¶ गच्छति" इति §॥ ८॥ ८६

° उ० ६,२,३,१—१.१,१२,३ = ऋ० ७,५,२,२ = ऊहे १,१,१७— १,२,१८—६,१,१७ —६,१,२०—११,२,२—११,२,३—११,२,१३—१५,१,१६—१६,१,१४— १८,१,१७ —१९, २,१९—१९,२,२०—१९,२,२१—२२,२,७ = ऊह्ये २,१,४—३,१,४—६,१,६।

† "ऋजिश्वा भारद्वाजः—अम्बरीषो वार्षागिरः"—इति ऋषि-सू०।

‡ 'परि समन्तात्'—इति वि०।

¶ 'परि देवं लक्षयित्वा'—इति वि०।

§ 'विनियोगोऽस्य नवमेऽवमि'—इति वि०।

२ १　　४२　　५　　　　　१ २
(वैरूपम् ॥) प्रसुन्वा२३नायमन्धसा: । मर्त्तः ।
१　　२२ ३　　५　　२ २ ३ २　　३　　५
नवा२ । ष्टतद्वा२३४चाः । अपश्वानमरा । धा२३४सा-
१ १२　　२　　३ २ ४
म् । ष्टतामा२३खम् । नभृ३गा५वा६५६: ॥ ३९ ॥ ८७

॥ इति अष्टमः प्रपाठकः ॥

प्रजापतिर्ऋषिः* । "सुन्वानाय" अभिषूयमाणाय [षष्ठ्यर्थे चतुर्थी† ] अभिषूयमाणस्य "अन्धसः" सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तान" मर्त्यं इव कर्म-विघ्न-कारी "तवष्टन" कामयतां न शृणोत्विति यावत् । तथा हे स्तोतारः "अराधसं" साधक-कर्म-रहितं‡ । "श्वानम्" "अपहत" । तत्र दृष्टान्तः—"मखम"¶ यथा पुरा अराधसं मखम् एतन्नामानं भृगवोऽपहतवन्तः तथा अपहतेत्यर्थः ॥

"सुन्वानाय"-"सुन्वानस्य"—इति, "वष्ट"-"हते"—इति च साम्न ऋचः पाठः ॥ ९ ॥ ८७

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्याष्टमः खण्डः ॥ ५ ॥

॥ इत्यानुष्टुभम् ॥

---

* "वाम्रः"—इति ऋषि-नै० ।

† "षष्ठ्यर्थे चतुर्थीति वाच्यम् ( २, ३, ६२ )"—इति का० वा० ।

‡ "साधनं धन-रहितम्'—इति वि० ।

¶ "हतामखम्"—इति मन्त्र-पाठस्य 'हता'—'मखम्'—इति पदकारस्य छेदः ।

जगत्योऽभिप्रियाणीति मुख्या द्वादश सम्मताः* ।
आद्यास्तिस्र ऋचो दृष्टाः कवि†नाम्ना महर्षिणा ।
उत्तरा विप्रकीर्णत्वाद्वक्ष्यन्ते ऋषयः पृथक्‡ ॥

अथ नवमे खण्डे—

सैषा प्रथमा ।

२ २ ३ १ २   ३ १ २   ३
अभिप्रियाणिपवतेचनोहितो
१ २   ३ २उ   ३ २ २ १ २
नामानियह्वोअधियेषुवर्द्धते ।
१   २र   ३ २ ३ २उ   ३
आसूर्यस्यबृहतोबृहन्नधि
२ ३ १ २   ३ २
रथंविष्वञ्चमरुहद्विचक्षणः ॥ १ ॥ ८८¶

---

भगवान् सायणोऽपि तथैव व्याख्यातवान् । मम मते चनेत्याकारस्य द्व्यचोऽतस्तिङ इति (६,३, १३५) दीर्घे 'चना'—इति रूपम् ॥ विवरणकारस्तु 'चन'—'अन्नम्'—इत्येवं छिदं स्वीकृत्य 'अन्नं यस्य परिष्कृतम्'—इति व्याचख्यौ ।

* अत्र नवमे खण्डे अभिप्रियाणीत्याद्याः द्वादश ऋचः सम्मताः पूर्वाचार्य्याणामिति शेषः ।

† "कविः भार्गवः"—इति ऋषि मै० ।

‡ तत्र द्वादशसु आद्यास्तिस्र ऋचः कविनाम्ना महर्षिणा दृष्टाः । उत्तराः ऋचः नैकेन दृष्टा इति तत्र ऋषि-विप्रकीर्णत्वम् तस्मात् तत्र ऋषयः पृथक् वक्ष्यन्ते ।

¶ उ० १,१,१९,१=ऋ० ७,२,२३,१= आरण्ये २,१,६ ऊहे =१,१,१२—९,१,२—१३,१,१८—१६,१,१५—१९,१,१४=उह्ये १४,१,१—१४,१,१९ ।

श्रोम्॥ (कावम्॥) श्राभिप्रीर२३४या। णीपावार२३४
ताइ। चानोहिता२३ः। नामानीर२३४या। क्रोश्रधी
२३४ये। षूवर्द्धतायेऽ। श्राद्धरीर२३४या। स्याबृहा
२३४ताः। बृहन्नधायेऽ। रास्थंवा२३४इषा। चामाह
२३४हात्। विचा३१उवार२३। वा२३४णः॥ १॥

(ऐडकावम्॥) एधु। श्रभिप्रियार२। णिपवताइ।
ए५। चनोहिताः। ए५। नामानीयार२। क्रोषधि
याइ। ए५। षुवर्द्धताइ। ए५। श्राद्धरियार२। स्य
बृहताः। ए५। बृहन्नधी। ए५। रथंविष्वार२। चम
हात्। ए५। विचक्षणाः। श्रो५इ। डा॥ २॥

(वाजसनि॥) अभ्यौहोवाहाइप्रियाणी। पवता
इष्वा२३४नो। हिताः। नामानियक्रोश्रधियेषुवर्द्धताइ।

२र १ २ र १ २ १ २ १ २
आद्धर्यस्य वृष्णो बृहन्नधाइ। रथम्। वाइश्वञ्चमरुहत्।
२ १ १११
विचा३१उवा२३। क्षा३णा२३४५ः॥ ३॥

२ १ २र १ १
(वाजजित्॥) अभिप्रिया। णीपवताइ। होइहो
२ १२ ५र ४ ५र ४ ५ २र
वा३होये३४। चनोहिताः। हाहो। वाहाइ। ना
र १ २र १ १ २ १२ ५
मानिया। श्रोअधियाइ। होइहोवा३होये३४। पुव
४ ५र ४ ५ २र र १ २र १
र्बुताइ। हाहो। वाहाइ। आद्धरिया। स्याव्वृहताः।
१ २ १२ ५ ४ ५र ४ ५
होइहोवा३होये३४। बृहन्नधी। हाहो। वाहाइ।
२ १ २र १ २ १ २ ५
रथंविष्वा। चामरुहात्। होइहोवा३होये३४। विच
४ ५र ४ ५ ५ २र१र २ १
क्षणाः। हाहो। वाईहाउ। वा। वाजीजिगी३वा
२१॥ ४॥

२ १ २र १ २र१र
(वाजजित्साम॥) अभिप्रिया। णीपवताइ। चानो
१ १ २र र १ २र १
हिताः। होवा३होइ। नामानिया। श्रोअधियाइ।
२र १ २ १ २र र १ २र १
पूवर्बुताइ। होवा३होइ। आद्धरिया। स्यावृहताः।

२र १　　२ १　　२ १　　१र १
वृहन्नधाइ। होवा३हो। रयंविश्वा। चामरुहात्।

१र १　　२ १　　१ १र र　　१र१र
वीचक्षणाः। होवा३हो२। वार३४औहोवा। वाजी

१र१र　१र १ ५र ११११११
जिगीवाविश्वाधना२नीर३४५॥ ५॥

५ ४　　२१र　　२
(स्वारकावम्॥) अभ्योवा। प्रियाणिपवताइ। च

र १　　१र र　र　　२ १
नोहाइता२ः। नामानियह्वोअधियाइ। षुवर्द्धाता२इ।

१र र　　२ १　　१ २ ४ ५
आरुर्यस्यवृहतो। वृहन्नाधीर३। राथा३०वाइषा।

२ १　　१ २ ४
चमरुहा२३त्। वाइचा३क्षापूणा६५६ः॥ ६॥ ८८

"चनोहितः" [चन इत्यन्ननाम* चायतेरसुनि चन इत्यौणादिक-सूत्रेण निपातितः] चनसेऽन्नाय हितः। यद्वा। हितान्नः सोमः "प्रियाणि" जगतः प्रीणयितॄणि नामानि नमनशीलानि तान्युदकानि "अभिपवते" अभितः क्षरति करोति। "येषु" अन्तरिक्ष-स्थितेषु उदकेषु "यह्वः" महानहं सोमः "अधि

* "चनोत्र प्रसितामीमानि हवींषि चनो दधिष्व। चन इत्यन्ननाम"—इति नै० ६, १६।

अथ द्वितीया।

२ ३१२ ३ १ २ ३
अचोदसोनोधन्वन्त्विन्दवः

२ ३ १ २ ३ १ २ ३ १ ३ १ २
प्रस्वानासोबृहद्देवेषुहरयः।

१ २ ३ ३ १ २ ३ १ २ ३
विचिदश्नानाइषयोअरातयो

१ २ ३ १ २ ३ १ २
र्योनःसन्तुसनिषन्तुनोधियः॥ २॥ ८९*

२ र १ २र १
(आङ्गिरसानि त्रीणि॥) अचोदासोऽ२३। नोधन्वान्

२र १ १ र १ २ १ २र
२३। तूइन्दवाः। प्रस्वानासोऽ२३। बृहद्दाइवे३३। षू

१ २ १ २र १ २र १र
हरयाः। विचिदाश्ना२३। नाइषायाऽ२३ः। आरातयाः।

वर्द्धते" अधिकं प्रवृद्धो भवति। अपां मध्ये सोमो वसति खलु।
ततः "बृहन्" महान् सोमः "बृहतः" महतः परिवृढस्य
°"सूर्यस्य" "विष्वञ्च" विष्वग्गमनं रथम् "अधि" उपरि[†] "विच-
क्षणः"[‡] विश्वस्य द्रष्टा सन् "आरुहत्" आरोहति। "अग्नौ
प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते(म० ३,७६)"—इति॥१॥ ८८

° ऋ० ७,३,४,१।

† "अधि उपरि आदित्यमण्डलात् चतुर्थे मण्डले रथे विद्युत्स्थं नाम"—इति वि०।

‡ "विचक्षणः विविधं प्रकाशयन इत्यर्थः"—इति वि०।

१ र १ २र १ २र १र १ १
अर्यानाःसा२३। नूसनाइषा२३। नूनाधिया३१उवा२-
१ १ १
३४५॥ ७॥

१ २र १ १ २र ४ ५ ४ ५ १ २र
आचोदसो। नोधनुवन्तु। इन्द्रवाः। प्राखा
१र १ ३ ४ र र ५ ४ ५ १ २ ३ १ २र ४
नासो। बृहद्देवेषु। हरयाः। वाइचिदस्मा। नाइ
र ५ ४र ५ १ २र ३ १ ३ ४ ५ ४
षयोअ। रातयाः। अर्यानःसा। तुसनिषं। तुनो
पुधियाउ। वा॥ ८॥

२र र २ र र ५र १ २ ४
हाउहोवा३हाइ। अचोदसोनो३धा। नुवा३न्तू
२ ३ १ १ १ १ २र र २ र र र
३। इन्द्रवा२३४५ः। हाउहोवा३हाइ। प्रखानासोवृ३
१ २र ४ २ ३ १ १ १ १ २र र २
३हात्। देवे३षू३। हरया२३४५ः। हाउहोवा३हाइ।
र ५र १ २ ४ २र २ १ १ १ १ २र
विचिदस्मानार्आइ। षयो३आ३। रातया२३४५ः। हा
र २ र १ २ ४ २र
उहोवा३हाइ। अर्यानःसन्तू३सा। निषा३न्तू३। बोधि
१ १ १
या३२उवा३४५॥ ९॥

(सामराजम् ॥) अचोह्वाइ। दासोनोधनुवा। तुइन्दावा२ः। प्रस्वानासोबृहद्देवाइ। पुद्दरायार२ः। विचो२३४ह्वाइ। अभ्रो२३४ह्वाइ। नाइषयः। भरो२३४ह्वाइ। तायाः। भर्यो२३४ह्वाइ। नःसो२३४ह्वा। तूसानो२३४षा। तूना३उवा३। धी२३४याः॥ १०॥

(सामराजम् ॥) अचौह्नोवा। दासोनोधनुवाः। तुइन्दावा२ः। प्रस्वानासोबृहद्देवाइ। पुद्दरायार३ः। वाइचोइदाभ्रा। नाइषार३४या। ह्वोइ। अरातार३४याः। ह्वो३इ। भार्यो३नाःसा। तूसानी२३४षा। ह्वो। तुनो३धा५याई५६ः॥ ११॥

(सिमानांनिषिधः॥) अचो। वाह्वाइ। दासोनोधनुवा। तुइन्द्र२वाः। प्रास्वानोसोबृहद्देवाइ। पुद्द

१ १ २ १ २ १र ४
रायार्२३ः। वार्२३इचीत्। आ२३। आ३४। नाइ

२ ४र ५र १ २ १ २ १ २
षयोअरा। ना३याः। आ२३यां। नार्२३ःसा३४।

२ ४ ५ ३ २ ४
तुसनिष। तुनो३धा५या६५६ः॥ १२॥ ८९

"अचोदसः"* अचोदनाः अनन्यप्रेरिताः "इन्दवः" सोमाः "नः" अस्माकं† "प्रधन्वन्तु" प्रगच्छन्तु [ धन्वतिर्गति-कर्मा‡ ]। कुत्र? "बृहद्देवेषु हरयः" प्रभूत-देवयुक्तेषु यज्ञेषु [ यथा वा बृहद्देवकुलजेषु मथ्यते इति सम्बन्धः ] कीदृशा इन्दवः? "सुवानासः" सूयमानाः "हरयः" हरितवर्णाः¶। किञ्च। "अरातयः" अनादि-दान-रहिताः "नः" अस्माकम् "अर्यः"§ अरयः "इषयः" इषोऽन्नानि इच्छन्तः "अस्नानाः"‖ अशनेन भोजनेन वियुक्ता एव सन्तु। किञ्च। नोऽस्माकं "धियः" कर्माणि देव--विषयाणि स्तोत्राणि+ "सनिषन्तु" देवान् सम्भजन्तु॥

---

* 'चोदयति'—इति वि०।

† 'नः अस्मान्'—इति वि०।

‡ निघ २,१४,९४।

¶ 'हरयः हरणशीलाः'—इति वि०।

§ 'अर्यः स्वामिनः'—इति वि०।

‖ 'अस्नानाः विनाशयन्तः'—इति वि०।

+ 'धियः कर्माणि प्रज्ञा वा'—इति वि०।

अथ द्वयीया।

१ २ ३ ३ १ २ २
एषप्रकोशेमधुमाँ्अचिक्रद-
१ २ ३ १ २ ३ १ २ ३ १ २
दिन्द्रस्यवज्रोवपुषोवपुष्टमः।
३ २ १ २ ३ १ २ ३ १ २
अभ्यृ३तस्यसुदुघाघृतश्चुतो
३ १ २ ३ १ २ ३ १ २
वाश्राअर्षन्तिपयसाचधेनवः॥ २॥ ९०*

(वासिष्ठम्॥) एषप्रकोशे२। म। धुमाँ२। अचाइक्रा२३४दात्। इन्द्रास्यवाज्रा२ः। पुषो२। व पुष्टा२३४माः। अभाऋतास्या२। सु। दुघा२ः। घृ तास्चू२३४ताः। वाश्राअर्षान्ती२। प। यसा२३। चधा३इनापुवाई५ऊ६ः॥ १३॥ ९०

"देवेषु"—"दिवेषु" इति पाठौ॥ "विषिदग्राना इषयो अरातयोर्या नः सन्तु सनिषन्तु नः धिया"—इति छन्दोगाः। "विषिनग्रान इषो अरातयोर्यो नः सन्तु सनिषतनो धिया" बह्वृचाः॥ २॥ ८९

* ऋ० ७,२,१,१।

अथ चतुर्थी।

१ २ ३ २ ३ १ २ ३ २उ
प्रोष्ययासीदिन्दुरिन्द्रस्य निष्कृतꣳ

१ २ ३ १र २र ३ १ २
सखा सख्युर्न प्रमिनाति सङ्गिरम्।

"एषः" अयं सोमः "मधुमान्" मधुर-रसः "कोशे" द्रोण-कलशे "आविक्रदत्" अकर्मैव अब्दायते। कीदृश एषः? "इन्द्रस्य" "वज्रः" वज्रस्थानीयः बलकरत्वेन वज्रवत् प्रहरण-साधनत्वाद् वज्रत्वोपचारः*। "एषः" एव हि सोमः "वपुषः" वीजानां वप्तुरन्यस्मात् "वपुष्टमः"† अतिशयेन वप्ता। वीजावापस्य सोम-कर्तृकत्वात् [सोमो वै रेतोधा इति श्रुतेः]। "ऋतस्य" सत्यफलस्य सोमस्य धारा इति शेषः। ता "अभ्यर्षन्ति" अभि गच्छन्ति‡। कीदृश्यः? "सुदुघः" सुष्ठु दोग्ध्र्यः फलानाम्। "घृत-श्चुतः" उदकस्य रसस्य वा क्षारयित्र्यः "वाश्राः" शब्दयन्त्यः¶। पयसा युक्ता वाश्रा धेनव इव§ लुप्तोपममेतत्॥

"वपुष्टमः"-"वपुष्टरः"—इति, "अभ्यृतस्य" "अभीवृतस्य" —इति, "पयसा च धेनवः"-"पयसेन धेनवः"—इति च छन्दोग-बह्वृचानां पाठः॥ २॥ ९०

* 'पीते सति वज्रं क्षेप्तुं समर्थः'—इति वि०।

† 'दीपितारः'—इति वि०।

‡ 'अर्षन्ति चरन्ति'—इति वि०।

¶ वाश्राः कामयमानाः'—इति वि०।

§ 'चरन्ति पयः धेनव आदित्यरश्मयश्च'—इति वि०।

मर्यइवयुवतिभिःसमर्षति
सोमःकलशेशतयामनापथा ॥ ४ ॥ ९१ *

(लौशम॥) प्रोया२३४सीत। इन्दुरिन्द्रा२३। स्या
३निष्कृतम। सखासख्युः। नप्रमिना२३। तीइसङ्गि
रम। मर्यइव। युवतिभार२३इः। सा३मर्षति। सोमः
कला। शेशतया२३। मना३पापुथा६५६ ॥ १४ ॥

(उत्तरलौशम॥) प्रोयासीदिन्दुरिन्द्रस्यनिः। कृता
म। कृता२३४५म। सखा३१२३४। सख्युर्नप्रमिना
तिसम। गिराङ्गिराम। मर्या३१२३४ः। इवयुवतिभिः
समं। षताइषताइ। सोमा३१२३४ः। कलशेशतया।
मना३पापुथा६५६ ॥ १५ ॥

---

१ ऊ० ४,२,७,१ = ऋ० ७,२,१५,१ = जरे ४,१,७—६,२,१०—७,२,११—१०,१,५
—१२,२,१५—१३,१,१८ ।

२र १र　२ १
(प्रवह्लार्गवम् ॥) प्रोष्वयासाइन्। इन्दुरिन्द्रा। स्या
१　१र १　११　१
२निष्कृताम्। सखासख्युः। नप्रमिना। ता२इम्रङ्गि
२ १　२ १　१　२र
राम्। मर्यईवा। युवतिभाइः। सा२मर्षताइ। सो
१　१र१　१र १　१११
मः कला। प्रेश्नतया। मा२नापथार१उ। वा२३४५॥
॥ १६ ॥

२र १र　२ १　२र
(तक्रम् ॥) प्रोञ्चयासाइत्। इन्दुरिन्द्रा। स्या
१　२र ३ ५　३२ ३ ५र　३ २ ३
निष्कृतार३म्। सखासख्युः। नप्रामिना। तिसङ्गा
५　२ १　२ १　२र१　२
२३४इराम्। मर्यइवा। युवतिभाइः। सामर्षतायेइ।
२ १ ३ ५　३र१ ३ ५र　२ २　४
सोमःकला। प्रेश्नातया। मनाऽपापथा६५६॥ १७ ॥

१　र र ०
(यामम् ॥) ञ्चा२इ। इया। प्रोञ्चयासाइदिन्दु
४　२ ३ ५　१ र　०
रिन्द्रार३। स्याश्निष्कृतम्। सखासख्युर्नप्रमिना-
४ २ ३ ५　१　०　४ २
२३। तीइसङ्गिरम्। मर्यइवायुवतिभार३इः। साइम

३ ५ १ २ २
यंति। या२इ। इया। सोमः कलाशे१शतया२३।
२ ४
मनाइपा५थाई५ई ॥ १८ ॥ ९१

ऋषिगणऋषिः*। "इन्दुः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थान मुदरं "प्रो अयासीत्" प्रकर्षेणैव गच्छति। गत्वा च "सखा" सखिभूतः सोमः "सख्युः" इन्द्रस्य "सङ्गिरं" सम्बगिरणाधारभूत मुदरं† "न प्रमिनाति" न हिनस्ति। किञ्च। सः "मर्य इव"‡ "युवतिभिः" मर्त्यो यथा तरुणीभिः सह सङ्गतो भवति तद्वत् अय मपि सोमो युवतिभिर्मिश्रणशीलाभिर्वसतीवरीभिरद्भिः सह "समर्षति" सङ्गच्छते अभिषवकाले। स च सोमः "शतयामना" यात्रा अनेकया मनसाधनच्छिद्रोपेतेन "पथा" मार्गेण दशापवित्रसम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः। यद्वैकमेव वाक्यम्। यथा मर्यो युवतिभिः सह सङ्गच्छते एवं कलशे शतयाम्ना पथा सङ्गच्छतेऽद्भिः॥

"शतयामना"-"शतयाम्ना"—इति पाठौ॥ ४ ॥ ९१

---

*"शिकतानिवारो"—इति ऋषि-नै०।

† 'सङ्गिरं कुलम्'—इति वि०।

‡ 'निष्कृतं समवायम्'—इति वि०।

¶ 'मर्याः'—इति मनुष्यनामसु एकादशं नैघण्टुकम् २,३। "छन्दसिनिष्टर्क्य (पा० ३,१,१२३)"—इत्यादिना निपात्यते मर्यइति।

अथ पञ्चमी ।

२ ३ २ ३ १ २ ३ २ ३ २ ३
धर्त्तादिवःपवतेकृत्व्योरसो
१ २ ३ १ २ ३ १ २ ३ १ २
दक्षोदेवानामनुमाद्योनृभिः ।
१ २ ३ १उ ३ १र २र ३
हरिःसृजानोअत्योनसत्वभि
२ ३ १ २ ३ १
र्वृथापाजांसिकृणुषे*नदीष्वा ॥ ५ ॥ ९२ †

२ १ २ ४र
(वात्साश्विरसौ द्वे ॥) धर्त्तादाइवा३ । ओवा५ए ।
१ र १ २ ४र २ १ २
पवतेकृत्वौ३योरासा३ । ओवा५ए । दक्षोदाइवा३ ।
४र २र र १ २ ४र २
ओवा५ए । नामनुमादौ३योनभा३ । ओवा५ए । ह
१ २ ४र २र र १ २
राइःसार्जा३ । ओवा५ए । नोअतियोना३सात्वाभा३ ।
४र २ १ २ ४र २
ओवा५ए । वृथापाजा३ । ओवा५ए । सिकृणुषाइन
१ २ ४र ४
दाइषूवा३ । ओवा३ए । ओ५इ । डा ॥ १९ ॥

---

* "कृणुते"—इति ऋग्वेदीय-पाठः ।

† उ० ४,१,१२,१ = ऋ० ७,१,१,१ = आरण्ये १,२,४—१,२,२५—१,२,२६—१,२,२७—१,२,२८ = ऊहे ४,२,१४— ९,१,१६—१४,१,१५—१७,१,२०—२२,२,१६—२१,२,१९ = ऊह्ये ३,१,१०—४,१,४ ।

५ र र ४ ५ २ १ २ ३र ५
धर्त्ता औहोहोहाइ। दिवः। पवतेका। औहो३

२ २ १र र २ ३र ५ २
हा३। हा। त्वियोरसो। दक्षोदेवा। औहो३हा३।

२ १र २ १र २ ३र
हा। नामनुमा। दियोनृभाइः। हराइःसाजो। औ

५ २ २ १र १ १ र
हो३हा३। हा। नोअतियो। नसत्वभाइः। वृथापा

२ ३र ५ २ २ १ २ ३र ५ २
जा। औहो३हा३। हा। सिक्तायूषा। औहो३हा३।

२ ३ र २ १ ३र ५ २ २ ५र र
हाइ। नदीषुवा। औहो३हा३। हा३४। औहोवा।

२ ३ १र २
ए३। नदीषुवा१ ॥ २० ॥ ९२

कविऋषिः*। "धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्तरिक्षस्थिताद्द्यापवित्रात् "पवते" पूयते। कीदृशः सोमः? "क्रत्वाः" कर्त्तव्यः शोध्य इत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः†" बलप्रदः। यद्वा। दक्षः प्रवर्द्धनीयो देवाना

* "भार्गवः"—इति ऋति-नै०।

† 'दक्षः शोधुः'—इति वि०। "दक्षः"—इति बलनामसु पठितम् नैघण्टुकम् २,९।

अथ षष्ठी।

१ २　२ १ २　　३ २उ
वृषामतीनाम्पवतेविचक्षणः
२ १ २　　२ १र २र　　२ १
सोमो अह्ना*म्प्रतरीतोषसा†न्दिवः।
२ १र　२र २ १ २　　　२
प्राणासिन्धूनांकलशाँ अचिक्रदत्
१ २ ३ १ २ ३ १ २ ३ १ २
दिन्द्रस्यहार्द्याविशन्मनीषिभिः ॥ ६ ॥ ९३ ‡

अर्थाय। तथा "नृभिः" नेतृभिर्ऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न"¶ अश्व इव स यथाश्रितोऽनसेन गच्छति तद्वत्। "वृथा" अप्रयत्नेन "पाजांसि" बलानि§ स्वीयान् वेगान् "कृणुते" कुरुते "नदीषु"‖ वसतीवरीषु ताभिरित्यर्थः। मिश्रित इत्यर्थः। अथ अभिषव-समयाभिप्रायः+ ॥ ५ ॥ ९२

* "अह्नः"—इति
† "उषसो"—इति } ऋग्वेदीय-पाठौ।

‡ उ० २,१,१०,१=ऋ० ७,२,१५,४=ज्ये २,१,१०—९,१,५—१६,१,१०=ऊह्ये ४,१,२।

¶ "अत्यः"—इति अश्व-नामसु प्रथमं नैघण्टुकम् १,१४।

§ 'पाजांसि बलानि'—इति वि०। "पाजः"—इत्यन्ननामसु पाठभेदेन तृतीयं नैघण्टुकम् (२,१)—बलनामसु च द्वितीयम् (२,९)।

‖ 'नदीषु रश्मिषु'—इति वि०।

+ 'योगोऽस्माहमेऽत्तनि'—इति वि०।

(ऐडयामम्॥) वृषामातीर२३। नापवाता२३इ। ए३। विचक्षण३। सोभोग्राक्षा२३म्। प्रतराईता२३। ए३। उषसान्दिवए३। प्राणासाइन्धू२३। नाक्ष लाशा२३। ए३। अचिक्रदद३। इन्द्रस्याद्दा२३। दियावाईशा२३न्। ए३। मनिषिभिर३४३। ओ२३४५ इ। डा॥२१॥

(यामम्॥) वृषामतीनाम्पव। ताइवा१इचा२३४। ण। णा२३४५ः। सोमोग्रक्षाम्प्रतरी। तोषा१सा२३४ म्। दि। वा२३४५ः। प्राणासिन्धूनाकल। शा२ आ१चा२३४इ। क्र। दा२३४५त्। आइन्द्रस्यहार्दि याविं। शान्मा१ना२३४इ। षिभा२३। वा३४५॥२२॥

१ १ १र २ २ १ २ १र
वृषा२मता२इ। नाम्पवतेविचक्षा२३णाः। सोमो
१ १ २ २ २१र २ १र १
२अह्ना२म्। प्रतरीतोषसान्दा२३इवाः। प्राणा२सि
१र २ २ १ २ १ १
न्धू२। नाङ्कलशा॰अचिक्रा२३दात्। इन्द्रा२स्यहा२।
१ २ १ १र १ १
दियाविशन्मनीषा२३इभा३४३इः। घो२३४५इ। डा॥

॥ २३ ॥ ९३

त्रिगण ऋषिः*। अयं "सोमः" "पवते" अभिषूयते†।
कीदृशः सोमः? "मतीनां" मतयः स्तोतारस्तेषां‡ "वृषा" वर्षकः
कामानाम्। "विचक्षणः" विद्रष्टा¶ "अह्नाम्" उषसां "दिवः"
द्युलोकस्यादित्यस्य वा "प्रतरीता" प्रवर्द्धयिता§। किञ्च।
"सिन्धूनां" स्यन्दमानाना मुदकानां‖ "प्राणः" [प्रकर्षेण अनिति
चेष्टते इति प्राणः] कर्त्ता सोमः "कलशान्" "अचिक्रदत्"
धारया अध्वनयत् प्रवेष्टुम्। यद्वा। "सिन्धूनां" [तृतीयार्थे षष्ठी]

* "कविः भार्गवः"—इति ऋषि-नै०।

† पवपाने षु चरने इत्यर्थः।

‡ "मतीनां प्रज्ञानाम्"—इति वि०। "मतयः"—इति मेधावि-नामसु च द्वाविं-
शतितमं नैघण्टुकम् ३,१५।

¶ "विचक्षणः विविधं प्रकाशयिता सोमः"—इति वि०।

§ 'प्रतरीता प्रकर्षेण तारयिता'—इति वि०।

‖ "सिन्धवः"—इति नदीनामसु एकविंशतितमं नैघण्टुकम् १, १३।

अथ सप्तमी ।

१ २ ३१२११
त्रिरस्मैसप्तधेनवोदुदुह्रिरे

३२ ३ १२ ३१२
सत्यामाशिरम्परमेव्योमनि ।

३ २ ३१२ ३२ ३ १ ३
चत्वार्यन्याभुवनानिनिर्णिजे

१ २ ३ २३१२ ३२
चारूणिचक्रेयहतैरवर्द्धत ॥ ७ ॥ ९४ *

१ ५र ४ ५र ४
( मरुतान्धेनुसाम ॥ ) चार३४इ: । त्रस्मैसप्तधेन

५र र ४ ५ २१र र १ र
वोदुहौ । होह्राइराइ । सत्यामाशिरम्परमाइ । वियो

सिन्धुभिरद्भिः "प्राणा" [ प्रा पूरणे ( अ० प० ] पूर्णः "सोमः" कलशान् "अभि" लक्ष्य क्रन्दते । किं कुर्वन् ? इन्द्रस्य "हार्दि" हृदयम् "आविन्" प्रविशन् "मनीषिभिः" मनसईशित्रीभिः स्तुतिभिः सदेति शेषः [यद्वा । व्यवहितमपि मनीषिभिरित्येतत् पवतइत्यनेन सम्बध्यते † ॥

"प्राणा"—इति, "क्राणा"‡—इति, "अचिक्रदद्"—"अवीविशत्"-इति पाठाः ॥ ६ ॥ ९३

---

* ऋ० ६,२,१०,१ = ऋ० ७,१,२३,१ = अष्टे ८,१,११ ।

† 'विनियोगोऽस्य तृतीयेऽहनि'—इति वि० ।

‡ क्राणाः—इत्यस्य कुर्वाणाइत्यर्थः सौक्षतो यास्केन न० ४, १९ ।

१ १र र २ १ २
मानी२। चत्वार्यन्याभुवना। निनिर्णाइजा२३इ। चा
२ ५ १र१ १र १ २ ४
रूणा२३४इचा। क्रेयदृतैः। आवा३र्द्धापूता६५६ ॥२४॥९४

रेणुर्ऋषिः*। "अस्मै" पवमानाय "परमे" उत्कृष्टे "व्योमनि" [ विविधं ओम अवनं गमनं देवाना मत्रेति]व्योमा यज्ञः तस्मिन् स्थिताय। यद्वा। परमे व्योमन्यन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्याम्" यथार्थभूतं "आशिरम्" आश्रयण-साधनं क्षीरादि "दुदुह्रिरे" दुहन्ति [ यद्वा। त्रिःसप्त—द्वादश मासाः—पञ्चर्त्तवः—त्रयइमे लोकाः—असावादित्य एकविंशइति। एतैः सर्वैः सह गोषु पय उत्पाद्यते तद्गावो दुहन्तीति ]। किञ्च। अयं सोमः "अन्या" अन्यानि चत्वारि "भुवना" उदकानि वसतीवरीस्तिस्रश्चैकधना इति तानि चतुःसङ्ख्यानि† "चारूणि" कल्याणानि "निर्णिजे" निर्णेजनाय परिशोधनाय परिपोषणाय वा "चक्रे" तदा करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैः "अवर्द्धत" वर्द्धितवान् तदा करोति ‡।

"दुदुह्रिरे"–"दुदुह्रे"—इति, "परमे"–"पूर्व्ये"—इति च पाठः ॥ ७॥ ९४

---

* "वैश्वामित्रः"—इति ऋषि-नि०।

† वसतीवरीसञ्ज्ञाना मपा माधार एको घटः, एकधन-नामकाश्च त्रयः। तत्र वसतीवरी-घटोदकेनाभिषुतसोमरसस्य वर्द्धनं भवति, एकधनघटानान्तु सोमाभिषवे उपयोगः।

‡ विनियोगोऽस्याभिप्लवे। अस्मै सोमाय। सप्त धेनवः सप्तच्छन्दांसि। त्रिः=प्रातःसवन-;

अथाष्टमी।

१ २ ३ १ २ ३ १ २ ३ १ २र

इन्द्रायसोमसुषुतःपरिस्रवा

२र ३ १ २ ३ १

पामीवाभवतुरक्षसासह।

३ १ २ ३ १ २

मातेरसस्यमत्सतद्वयाविनो

१ २ ३ १ २ १ २

द्रविणस्वन्तइहसन्त्विन्दवः॥ ८ ॥ ९५ *

---

* उ० ७,२,१०,१।

माध्यन्दिन-तृतीयसवनेषु दुदुह्रिरे। अथवा त्रिभिः सवनैः सप्त धेनवः सप्तहोतारो वा वषट्कारिणः होता मैत्रावरुणः ब्राह्मणाच्छंसी पोता नेष्टा अच्छावाक आग्नीध्रः। एतेषां वाचः दुह्यन्ते। अथवा धेनवः दुह्यन्ते सत्या माशिरम्। आश्रयणीयं मिश्रणं वा परमे प्रकृष्टे व्योमनि स्थाने यज्ञे वा। चत्वारि अत्यग्निष्टोम उक्थ्यः षोडशी अतिरात्रश्चतुर्थः। अथवा पृथिवी अन्तरिक्षं द्यौर्दिशश्चेति। अथवा चत्वारो वेदाः। अथवा चत्वारो महर्त्विजः। अथवा चत्वारः समुद्राः। भुवनानि निर्णिजे चतुर्दश भुवनानि सप्त भूरादयो लोकाः सप्त पातालानि तान्यपि चारूणि चक्रे कृतवान्। केन प्रकारेण नयतः ऋतैः रत्नैः यज्ञैः सत्यैर्वा अवर्द्धन्त। अथवा तत् तत्र सप्त धेनवः सप्त रश्मयः। दुदुह्रिरे। अथवा सप्ताश्वाः। अथवा सप्त पावकजिह्वाः। सप्त मातरो वा सप्त भूरादयो लोकाः। सप्त पातालानि सप्त सोमसंस्थाः सप्त समुद्राः सप्त द्वीपानि सप्त स्वराः। एता दुदुह्रिरे सप्त। आशिरम् उदकं परमे व्योमनि। चत्वारि अन्याः भुवनानि पृथिव्यादीनि चारूणि चक्रे। यत् ऋतैः यज्ञैः अवर्द्धतेत्यथवा त्रिः अस्मै सप्त धेनवः सप्त प्राणाः शीर्षण्या इति त्रिः उत्पत्ति-स्थिति-प्रलयेषु स सत्याम् अवितथाम् आशिरं स्नानं चत्वारि भुवनानि जाग्रत्-स्वप्न-सुषुप्ति-तुरीयाख्य अद्वैतावस्थे नित्याम् तेजोभिः अवर्द्धन्त विश्वा-नाय"—इति वि०।

१ १　　१ र　　४ १
( अपामीवम् ॥ ) इन्द्रा । यसोमस्सुता३ःपा३रिस्र
५　२ १　२र र　४ २र १ २　२र १
व । अपा । मीवाभवतुरा३क्षा३सासह । माताइ ।
२　४ २र २ ५　२ १　२
रसस्यमत्सता३दा३याविनः । द्रवाइ । णस्वन्तइहस ।
२ २　४
तुवा३इन्दा५वा६५६ः ॥ २५ ॥

२ १　र　४ ५　४५र　४
( वायोरभिदः ॥ ) इन्द्रायसोमस्सुतःपर्यौ ॥ चोइस्रा
५　१ र र र　१ १ १　१र र
वा । अपामोवाभवतुरक्षसा१सा३क्षा । मातेरसस्यमत्स
२ २ २　२　५　२　५　१ २ ३ २
तदया१वो३नो । द्रा२३४वा । णा२३४स्वा । ताइहसा
१　२　४
३ । हा२३ । तुवा३इन्दा५वा६५६ः ॥ २६ ॥ ८५

वेनोभार्गवऋषिः । हे "सोम!" त्वं "सु सुतः" सन् "इन्द्राय" तदर्थं "परिस्रव" परितो गच्छ रसं मुञ्च । "अमीवा" रोगः "रक्षसा सह" "मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह" "अप भवतु" अपगतो वियुक्तो भवतु "ते" तव "रसस्य" स्वांशं रसं पीत्वा "मा मत्सत" मा माद्यन्तु । के ? "द्वयाविनः" द्वयं सत्यानृतं तेन युक्ताः पापिन इत्यर्थः । किञ्च "इन्दवः" ते रसाः

अथ नवमी।

१ २ ३ १ २ ३२उ ३ १२
असाविसोमोअरुषोवृषाहरी

१ २३१२ ३ १र २र
राजेवदस्मोअभिगाअचिक्रदत्।

३ २उ ३१२३१२ ३१र
पुनानोवारमत्येष्यव्ययꣳश्येनो

२र३१२३१ २
नयोनिङ्घृतवन्तमासदत्॥ ८ ॥ ९६ *

२ र १ २र १
(यामानि त्रीणि॥) असाविसो। मोअरुषोर२३४।

५र ४ २र र १ २र १ ५ ४
वृषाहराइः। राजेवदा। स्मोअभिगार२३४ः। अचिक्र

२ र १र २र १ ५ ४
दात्। पुनानोवा। रामतियार२३४इ। षिअव्ययाम्।

२रर१ २ १ ४ ४
श्यनोनया। निङ्घृतवार२३। तमा५सदात्। चो५इ।

डा॥ २७॥

"इह" अस्मिन्यज्ञे "द्रविणस्वन्तः" अस्माकं धनवन्त "सन्तु" भवन्तु †॥ ८॥ ९५

---

* उ० ५,१,१२,१ = ऋ० ७,२,७,१ = अरे ५,२,८—८,१,२—१०,१,४—१६,२,१०—२३,२,१० = कह्ये १,२,८।

† 'रयवन्तो भवन्तु देवानां न तु रायसादीनाम्'—इति वि०।

२ २ ५ २ २ ५ २र १र २
आसावीर२३४सो। मोअरू२३४षाः। वार्षोहराये

२ २ ५ २ २ ५ २र १
३ः। राजेवार२३४दा। स्मोअभीर२३४गाः। आचिक्रदा

२ २ ५ २ २ ५ २र १
२३त्। पूनानोर२३४वा। रामातीर२३४ये। षोषव्यया

२ २ ५ २ २ ५ २ २
२३म्। श्येनोनार२३४यो। निह्वार्त्तार२३४वा। तमा३।

१ २ ५र र २ १ १ १ १ १
सा२दार२३४औहोवा। दे३। दिवीर२३४५॥ २८॥

४ ५र ४र ५र ४र ५र ४ र ५र ४र
असाविसोमोअरुषोवृषाह। राइः। राजेवदस्मो

५ ४ र ५ ४ ५ र ४र र ५ ४ ५र ४
अभिगाअचिक्र। दात्। पुनानोवारमत्येष्यव्य। याम्।

५र ४र र ५ ४ २ २ १ २ ५र
श्येनोनयोनिह्वृत। वा। तमा३। सा२दा२३४औ

र २ १ १ १ १ १
होवा। ए३। दिवीर२३४५॥ २९॥ ९६

भरद्वाजो वस्य ऋषिः। "सोमः" "असावि" अभिषुतोऽभूत्। कीदृशः सोमः? "अरुषः" अरोचमानः* "वृषा" वर्षकः "हरिः"

* 'अरुषः अहिंसितः'—इति वि०। "अरुषम्"—इति रूपनामसु पञ्चदशं नैघण्टुकम ३,७।

अथ दशमी।

२ १र ३ २ १ २ ३ २ ३ १
प्रदेवमच्छामधुमन्तइन्दवो

२ ३ ३ १ २ ३ र ३ १ २
सिष्यदन्तगावत्र्यानधेनवः।

३ १ २ ३ १ २ ३ १ २
बर्हिषदोवचनवन्तऊधभिः

३ १ २ ३ १ २ ३ १ २
परिस्रुतमुस्रियानिर्णिजन्धिरे ॥ १० ॥ ९७*

हरितवर्णः† । स च "राजेव" "दस्मः" दर्शनीयः सन् "गाः" उदकानि‡ "अभि" लक्ष्य "अचिक्रदत्" शब्दङ्करोति स्व-रस-निर्गम-समये। पश्चात् "पुनानः" पूयमानः "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि"¶ हे सोम! अतिक्रम्य गच्छसि। ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम् § "आसदत्" वसतीवरीष्वासीदतीत्यर्थः ‖ ॥

"अत्येषि"-"पर्येति"—इति, "आसदत्"-"आसदम्"—इति च पाठः ॥ ९ ॥ ९६

* ऋ० ७,२,१९,१।

† 'हरिः हरणशीलः'—इति वि०।

‡ इह मार्ग लक्ष्यन्।

¶ 'अत्येषि अत्येति व्यत्ययेन'—इति वि०।

§ "घृतम्"—इति उदकनामसु दशमं नैघण्टुकम् १.१२।

‖ 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।

४ ५ १ २ २र १ २
(मत्स्यान्वितु॥) प्रादे। वमच्छामधुम। तमा२-
१ २ ३ ५ २ १र २र
इन्दवाः। आसिष्यार२३४दा। तगावमा। नधा२इन
१ २ ३ ५ २ १र ५र १
वाः। वर्हिषार२३४दाः। वचनावा२। नऊ२४भाइः।
२ ३ ५ २ १ र ५
पारिषू२३४ताम्। उस्त्रियानिर्णिजन्धाइरायेइ। धाइ
२ ५र र २ १११११
रा३४औहोवा। धाइइरा२३३५इ॥ १०॥ ९७

वत्स ऋषिः*। "मधुमन्तः" मदकर-रस-युक्ताः "इन्दवः" सोमाः "देवं" द्योतमानं सोमात्मकम् इन्द्रम् "अच्छ" प्रति "प्रासिष्यदन्त" परिस्यन्दन्ते ग्रहादिषु † प्रचरन्ति। [स्यन्दतेर्लङन्तस्य लुङि चङि रूपम्] तत्र दृष्टान्तः। "गाव आ न धेनवः" पयस्विन्यः प्रीणयित्र्यः गावो यथा वत्सं प्रति पयांसि प्रस्रवन्ति

---

* "वत्सप्रीः भालन्दनः"—इति ऋषि-नि०॥

† अभिषवेणाप्लुतहिताभसोमपीतसोमा तदाधारत्वात्तदीयचमसपात्राद्योऽपि ग्रहा उच्यन्ते। ते च प्रातःसवने, पञ्चविंशति-संख्याका भवन्ति। तथाहि—१ उपांशुः—२ अन्तर्यामः— ३ ऐन्द्रवायवः—४ मैत्रावरुणः—५ आश्विनः—६ शुक्रः—७ मन्थी—८ आग्रयणः— ९ उक्थ्यः— १० ध्रुव—११-२३ ऋतुग्रहाश्च त्रयोदश—२४ ऐन्द्राग्नः—२५ वैश्वदेवश्चेति। माध्यन्दिनसवने चत्वारि—तत्र, मरुत्वतीयाख्यो माहेन्द्रश्च चतुर्थः। तृतीयसवने तु पञ्च, तथाच—१ आदित्यः—२ सावित्रः—३ वैश्वदेवः—४ पात्नीवतः—५ हारियोजनश्चेति।—इत्येव सङ्कलनया ग्रहाश्चतुस्त्रिंशदिति।

अथैकादशी ॥

१ २ ३क२र ३ १ २ ३
अञ्जतेव्यञ्जतेसमञ्जते

१ २ ३१ ३क २र
क्रतुꣳरिहन्तिमध्वाभ्यञ्जते।

१ २ ३ २३१२ ३ १ २
सिन्धोरुच्छ्वासेपतयन्तमुक्षणꣳ

३१ ३ १ ३१ २
हिरण्यपावाःपशुमप्सुगृभ्णते ॥ ११ ॥ ९८ *

२ १ २ १ २
( प्रागीनि त्रीणि ॥ ) अञ्जताइ। वियञ्जताइ। सम

१ १ २र १ २ १
ञ्जाता२इ। क्रतुꣳरिहा। तीमधुवा। भियञ्जाता

तद्वत्। किञ्च। "बर्हिषदः" बर्हिषि सीदत। "वचनवन्तः" हम्भा-रवादि-शब्दवन्तः [उस्रियेति गोनाम †] तादृश्यो गावः ऊधभिः पयआधारकैः स्वैः स्वैरूधोभिः तेभ्यः "परिस्रुत" परितः स्रवणशीलं "निर्णिजं" शुद्धं पयोभूतं सोमरसं "धिरे" दधिरे इन्द्रार्थं धारयन्ति ॥ १० ॥ ९७

---

* उ० ७,३,११,१ = ऋ० ७,३,२०,१ = ऋग्वे ११,८,१७।

† "उस्रिया"—इति गोनामसु तृतीयं नैघण्टुकम् २,११।

२ १　१२१　२ १
२इ। सिन्धोरुच्छ्वा। सेपतया। तमुच्चाणा२म्। चिर

१　१२ १　१२ १　२　११११
ण्यपा। वाःप्सुमा। ण्सुगृभ्णाता३१उवा२३४५॥ ३१॥

२ २　१　२ १　२　४ २ ३ ५
अच्छा३चो। ते३चोइ। वियच्छते३सा३मच्छताइ।

३ २　१　३ २　१　२　४ २ ३ ५
क्रतू३ए३चोइ। रिहा३चो। तिमधुवा३भी३मच्छताइ।

३ २　१　३ २　१　१२　४ २ ३ ५
सिन्धोः३चोइ। उच्छा३चो। सेपतया३न्ता३मुच्चाणम्।

३ २　१　३ २　१　१२　२ २　४
चिरा३चो। ण्यपा३चो। वाःपप्सुम्। ण्सुगा३भ्णाप्रु

ता६५६इ॥ ३२॥

४　५　१　३४५ २३४५ २　१ ३ २
छावाच्छा। ना२३४इ। वियच्छतेसमच्छते। एचिया।

१ ३ २　५　१　३ ४ २ ३
एचिया३४। छाउक्रातूम्। रा२३४इ। चन्तिमधुवाभि

४ ५२　१ ३ २　१ ३ २　५　१
यच्छते। एचिया। एचिया३४। छाउसाइन्धोः। उ२

१२ २ ४ ३ ४ ५　१ ३ २　१ ३ २
३४त्। छ्वासेपतयन्तमुच्चाणम्। एचिया। एचिया३४।

अथ द्वादशी।

१ १ २ ३ १ २
पवित्रन्ते विततम्ब्रह्मणस्पते

३ १२ ३२ ३१२ ३ १२
प्रभुर्गात्राणिपर्येषिविश्वतः।

५ १ २ १२ ४ ३ ४ ३ ४ ५ २ १ २
हाउहाइ्रा। एया२३४। पावाःपव्रुमपस्तुगृभ्णाते। एहि

२ १ २ २ ५ ४
या। एहिया३४। हाउ। वो५इ। डा॥ १२ ॥ ९८

अत्रिऋषिः*। सोमम् ऋत्विजः "अञ्जते" गोभिः तथा "व्यञ्जते" विविध मञ्जति "समञ्जते" सम्यगञ्जति। स्तुत्यर्थ-त्वादपुनरुक्तिः † तथा "क्रतु" बलकर्त्तारं "रिहन्ति" लिहन्ति आस्वादयन्ति देवाः तथा पुनः "मध्वा" मधुना गव्येनाभ्यञ्जते। तमेव सोमं "सिन्धोः" उदकस्य रसस्याधारभूते "उच्छ्वासे" उच्छ्रिते देशे "पतयन्तं" गच्छन्तं [पतल्ह गतावित्यस्मात् स्वार्थिके णिचि वृद्ध्यभावश्छान्दसः] "उक्षणं" सेक्तारम् "हिरण्यपावाः" हिरण्येन पुनन्तः "पशु" द्रष्टारं ‡ [पशुः पश्यतेरिति निरुक्तम्] "अप्सु" वसतीवरीषु "गृभ्णते" गृह्णन्ति ¶॥

"मध्वा"-"मधुना"—इति, "अप्सु"-"आप्सु"—इति च पाठः॥ ११ ॥ ९८

* "भौमः"—इति ऋषि-मैं०।

‡ पुनरुक्तिदोषो नेति भावः।

† 'पशु' सोमम्'—इति वि०।

¶ 'विनियोग उपहवे प्रयम्यें च'—इति वि०।

१ २   २ २उ ३ १   २
अतप्ततनूर्न तदामो अश्नुते
३ २ ३ १र २ ३ १र २र
शृतास इद्वहन्तः सन्तदाशत ॥ १२ ॥ ९९ *

॥ द्वितीय-दशति ॥

२ १ २र १ २ १ २ १
(अर्कपुष्पम् ॥) पवित्रन्ते विततम्ब्रह्मणस्पते३ । ऊवे
१ २ २ १ १ र २र १ ०र
२३ । २ । होवा३हा३ । हाइ । प्रभुर्गात्राणिपर्येषि
१ १ १ २ २ २ १
विश्वता२३ः । ऊवे२३ । २ । होवा३हा३ । हाइ । अत
२ र १ ५र १र ३ १ १ २ २ २
प्ततनूर्नतदा२मो अश्नुते३ । ऊवे२३ । २ । होवा३हा३हा
१र २ १ २ १ ५ र १ १
इ । शृतास इद्वहन्तः सन्तदा२शत । ऊवे२३ । २ । हो
१ २ २ ५र र १ १र र र ५र १र
वा३हा३ । हा३४ । औहोवा । अर्कोदेवाना२म्परमेवि
५र १ १ १ १ १
यो२मा२३४५न् ॥ ३४ ॥

२ १ २र १ २ १ २
(अर्कपुष्पोत्तरम् ॥) पवित्रन्तेविततम्ब्रह्मणस्पते३ ।

* उ० ३,१,१६,१ = ऋ० ९,३,८,१ = आरण्ये १,१,११—१,१,१२—ऊहे ७,२,१
—७,३,१—१५,१,१ = ऊह्ये १,१,८—४,१,३ ।

१ २र १ १ र २र १ २र १
ऊवाइ। औहोवा२। प्रभुर्गात्राणिपरियेषिविश्वता२३:।
१ २र १ १ २ र१ ३र १र २ १
ऊवाइ। औहोवा२। अतप्ततनूर्नतदा२मोअश्नुते३। ऊ
१र १ १र११ २ १ ३र
वाइ। औहोवा२। शृतासइद्वहन्त:सन्तदा२शत।
१ १र १ ३ ५र र १ १ २
ऊवाइ। औ। होर। वा२३४। औहोवा। अर्कस्य
र १र २ १र ३र २ १ १ १ १
देवा:परमेवियो२मा२३४५न्॥ ३५॥ ९९

॥ इति ग्रामे गेये षोड़श: प्रपाठक: ॥

पवित्रऋषि:*। हे "ब्रह्मणस्पते" मन्त्रस्य स्वामिन्! सोम! "ते" "पवित्रं" शोभन मङ्गं "विततं" सर्वत्र विस्तृतम्। स "प्रभु:" प्रभविता त्वं "गात्राणि" पातुरङ्गानि "पर्येषि" परिगच्छसि। "विश्वत:" सर्वत: तव तत्पवित्रम् "अतप्ततनू:" पयोव्रतादिना असन्तप्तगात्र: † "आम:" अपरिपक्व: "नाश्नुते" न व्याप्नोति। "शृतास: ‡ इत्" शृताएव परिपक्वाएव "वहन्त:" यागं निर्वहन्त: तत् पवित्रं "समासत" व्याप्नुवन्ति ¶॥

---

* "आङ्गिरस:"—इति अर्षि-ब्रे०।

† 'अतप्तशरीर: शुक्रैरपि छिद्रै: इत्यापवित्रस्य'—इत्यादि वि०।

‡ 'शृतास: निष्पन्न-सोमा:'—इति वि०।

¶ व्याप्नुवन्ति द्रोणकलशम्'—इति वि०।

"सन्तदाप्रत"-"तत्समासत"—इति पाठौ* ॥ ६ ॥ ९९

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य नवमः खण्डः ॥

॥ इति आगतम् ॥

—:○:—

इन्द्रमच्छेति खण्डेऽस्मिन् ऋचो द्वादश संस्थिताः।
सकला उष्णिहस्तत्र वदन्ति ऋषयः पृथक् ॥

तत्र दशमे खण्डे—

सैषा प्रथमा।

२ ३१ २ ३ १२ ३१२ ३१२   ३ १ २
इन्द्रमच्छसुताइमेवृषणंयन्तुहरयः।
३ २   ३ २ ३ १ २   ३ १ २
श्रुष्टे†जातासइन्दवःस्वर्विदः ॥ १ ॥ १०० ‡

(पदे ६ ॥) इन्द्रमच्छ। सुताइमा। वीवो२३४वा।

* तन्त्रगुह्याचारिणां वैष्णवसम्प्रदाय-विशेषाणां मतेऽयमेव मन्त्रः शरीरे तन्त्र-चक्रा-धारकस्य; तथाच "अनग्नतनूः" ब्रह्मचर्यादिभिः न तप्ता तनूः यस्य स पुरुषः "आमः" अपरिपक्वः असंस्कृतः अतएव "तत्" प्रसिद्धं केवलं "न अश्नुते" इत्यर्थः। वस्तुतोऽस्य विनियोगो ज्योतिष्टोम-तृतीयेऽहनि।

† "श्रुष्टी"—ऋ०।

‡ ऊ० १,१,१७,१ = ऋ० ७,५,९,१ = अहे १,१,१०—२,१,७—६,१,१७—६,२,८—९,१,२० — १०,१,१६—१०,२,१ —११,२,१०—१२,१,१—१३,१,१०—१४,१,११—१४,१,१७।

१ २ १ ० २ ३र ५ २ १ २र १
वृषणंय। तूघ्वरया। औहो२३४वा। मुष्टाइजाता।

२ १ २ १ १ १ २ १
सइन्दवाः। सुवर्वा२३इदा३४३ः। ओ२३४५इ। डा॥१॥

५ २ १ १ १ १ २ १
इन्द्रमच्छा। सुताइमा३इ। ताइ३माइ। वृ

२ १० १ २ २ र र ३र १
षणंय। तूघ्वरया२ः। घारा३याः। अुष्टेजाता३सा

० १ २ २ १ १ ५र र
इन्दवा२ः। आइन्दा३वा३ः। सुवरा३४। औहोवा।

२ र १ १ १ १ १
विदोवौ३दा२३४५ः॥ २॥

४ ५ ४ २ १ २
(अनुपदे द्वे॥) इन्द्रम्। इन्द्राम्। मच्छा३सुता

१ १ २ १ ० १
१इमे२। आइमे२। वृषणंय। तूघ्वरया२ः। राया

र र ३र ० १ १ २
२ः। अुष्टेजाता३साइन्दवा२ः। दावा२३ः। सुवरा

५र र २ १ १ १ १ १
३४। औहोवा। विदो३विदा२३४५ः॥ ३॥

३ ४ ३ ४ ३र ४ ३र ४ ५ १ २१२
इन्द्रमच्छसुताइमेवृषणंयन्तुघ्वा। घो३४३। रयमा।

अथ द्वितीया।

१२ २१ २ ३१ २ ३१ २
प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव।

३१२ ३ २३१ २ ३१ २
द्युमन्तꣳ शुष्ममा भरा स्वर्विदम् ॥ २ ॥ १०१*

२ र १ र २ ३४५ २
अ॒ष्टाउवा। जाताउवा३४। सइन्दवःसुवा। हो।

१ र
विद्‌ओ२३४५इ। डा ॥ ४ ॥

१ २ १ २ ४ ५ १ २ ५
(पौष्कलम् ॥ इन्द्रमा३च्छसु। ताइ२३४माइ।

२ १२१ १ २ ५ २१ र ०
वृषाणया। नूषाराा२३४याः। अ॒शाइजाता। सइ२

३ २ १ २११११
न्दा२३४५वाई५६ः। सुवर्विदा२३४५ः ॥ ५ ॥ १००

अग्निश्चाक्षुषऋषिः। "सृष्टे" सृष्टौ चिप्रं "जातासः" जाताः "इन्दवः" पात्रेषु चरन्तः "स्वर्विदः" सर्वज्ञाः † "हरयः" हरितवर्णाः "सुताः" अभिषुताः "इमे" सोमाः "हसणं" कामानां सेक्तार मिन्द्रम् "अच्छ यन्तु" अभि गच्छन्तु ॥ १ ॥ १००

---

* ऋ० ७,५,९,४ = ऋचे ११,१,१।

† 'स्वर्विदः सर्वं लोकं विदन्ति'—इति वि०।

१ १२ २ १
( ऐषिराणि पञ्च ॥ ) प्रधन्वासौहोइ। औ३होर३४
५ १ १२ १ २ १२ २ १ ५
वा। मजागृविः। इन्द्रायेन्दौहोइ। औ३होर३४वा।
१ १ १ २ १ ५ १ १२
परिस्रव। द्युमन्तꣳऔहोइ। औ३होर३४वा। अमा
२ १२ १ १
भर। सुवर्विदौहोइ। औ३होर३४५वा६५६। ऊ२३
५
४पा॥६॥

२ १२ २ १ १ २ २ १ २ १२
प्रधन्वासौहो। वा३हो। मजागृवी२ः। इन्द्राये
२ १ १ २ १ १ २
न्दौहो। वा३होइ। परिस्रावा२। द्युमन्तꣳऔहो।
२ १ १ २ १ १२ २ १
वा३हो। अमाभारा२। सुवर्विदौहो। वा३हो२।
१ १२ २ १ ५
वा२३४औहोवा। ऊ२३४पा॥७॥

१२ १२ १ १ २ १२ २ २ १
औहोहोइ। प्रधन्वासो२। औहोहो। मजागृ
२ १२ १ २ १ २ १२
वी२ः। औहोहाइ। इन्द्रायाइन्दा२। औहोहोइ।
२ १ २ १२ २ १ २ १२
परिस्रावा२। औहोहोइ। द्युमन्ताꣳमू२। औहोहो।

१ २ १   २ १२   १ १ २
ब्भमाभारा२ । औहोहोइ । सुवः । वा२इ । दा२३४ ।
५२ २   ५
औहोवा । ऊ२३४पा ॥ ८ ॥

१ १ १ १ १ १
ऊवा२इ । ऊवा२इ । ऊवा२३होयि । प्रधन्वासो
२ १ २ १ १
२ । मजागृवी२ः । इन्द्रायाइन्दा२ । परिस्रावा२ ।
१ २ १ १
द्युमन्ताॱध्मा२ । ब्भमाभारा२ । सुववींइदा२म् ।
१ १ १ १ १ ५२ २
ऊवा२इ । ऊवा२इ । ऊवा२३होर२ । वा२३४औहोवा ।
२ ५
ऊ२३४पा ॥ ९ ॥

११ ४२ ५२ १ २ ५ १
प्रधन्वा२३सोमजागृवीः । इन्द्रा२या२३४इन्दो । भोइ ।
१ १ १ १ १ २ ५ १ ०
पा३रा३स्रा३वा । द्युमा२न्ता२३४ध्मा । औ । ब्भमा
२ १ १११
भा२३४५रा६५६ । सुवविंदा२३४५म् ॥ १० ॥ १०१

यज्ञुर्मानवऋषिः । हे "सोम !" "जागृविः" जागरण-
शीलस्त्वं "प्रधन्व" प्रक्षर । हे "इन्दो" सोम ! "इन्द्राय" "परि

अथ तृतीया ।

१ २ ३१ २ ३ २ ३१ २
सखायआनिषीदतपुनानायप्रगायत ।
२ ३ २ ३ १र २र ३ २
शिशुन्नयज्ञैःपरिभूषतश्रिये ॥ ३ ॥ १०२*

२ ऽर १ १र
( औक्तानि पञ्च ॥ ) सखा३याआ २ । निषीदता ।
र १ १र १ र १
पुनाना२३या । प्रगायता । शिशुन्ना२३या । यज्ञैःपरा
१ २ १
इभू२ । षताआ२३या३४३इ । ओ२३४५इ । डा ॥ ११ ॥
४ ५ ४ ५ २ २ ५ १ २ ५
साखायाआ । निषीदा२३४ता । पुना२ना२३४आ ।
१ २ ५र र २ ५ २ १ १ १ १र २
प्रा२गा२३४औहोवा । या२३४ता । शिशून्नया । यज्ञैःप
२ १ १ २ ५र र २
रिभू२३ । षा२ता२३४औहोवा । श्रिये१ ॥ १२ ॥

स्रव" परितः पात्रेषु चर । किञ्च "द्युमन्तं" दीप्ति-युक्तम् † । "स्वर्विदं" सर्वस्य लम्भकं "शुष्म" मनूणां शोषकं बलम् ‡ "आभर" आहर ॥ २ ॥ १०१

* उ० ४,२,९,१ = ऋ०७,५,७,१ = ऊहे २,१,२—४,१,२—७,१,१८—७,१,१९—९,१,१८—१४,१,२५ ।

† "द्युमत्"—इति दीप्ति-कर्मसु पठितम् नैघण्टुकम् १,१६ ।

‡ "शुष्मम्"—इति बलनामसु एकादशं नैघण्टुकम् २,९ ।

४ ५र ४र ५र ५ २ र १र र
सखायआनि। षीदाईता। पुनानायप्रगायाता।

र १र २ १ २
अभिद्युन्नयज्ञैःपरा२इ। भूषा२३ता३। आ२३या३४३इ।

२
ओ२३४५इ। डा॥ १३॥

५र र ४ ५र ४र ५र ५ २ र १र
ओवाइ। सखायआनि। षीदाईता। पुनानौवाइ।

२र १र ५ ४ ५ ४ २र १ र २र १ र २
पुनानौवोये३। यापायापा। गायतौवोइ। गायतौवोये३।

४ ५ ४ ५ २ १ र २ १ र २ ४ ५
आइभूऽआइभूम्। नयज्ञौवोइ। नयज्ञौवोये३। पारी।

३ २ ५र र २ २र २ २
पारा३४औवोवा। ए३। भूषतश्रियेऽ॥ १४॥

५ र २ २ २ ५ २ १ २ २ ५
सखा। यषाओ२३४वा। निषाइ। दाताओ२३४वा।

२ र १र ५र १ २ २ ५ १ र
पुनानायप्रगा२यत। आइआओ२२४वा। नयज्ञैःपरि

२ १ २ २ ५ २
भूइ। षाताओ२३४वा। श्रियेऽ॥ १५॥ १०२

पर्वतकाण्वनारदौ*। हे "सखायः" सखिभूताः! "स्तोतारः"

---

* पर्वतो देवः काश्यपिः, नारदश्च शैखण्डी अप्सरसः इति ऋषि-निर्देश-क्रमः।

अथ चतुर्थी।

१ २    ३ १ २    ३ २३ १ २
तं वः सखायो मदाय पुनानमभिगायत।

३ २ ३१    २    ३ १ २
शिशुं न हव्यैः स्वदयन्तगूर्त्तिभिः॥ ४॥ १०३ *

(कार्णश्रवसानि त्रीणि॥)    ३ ५ ३
ता२३४०वः। सा२३४

५    ३र १    २    १ र २    १र    २
खा। योमदा२३या। पनानम। भिगाया२३ता।

१    २ १ १    ३र    २ १    २३र    २    १
शाइशुन्नह। व्यः स्वदया२३। तङ्गूर्त्तिभा३४३इ। षो२

३४५इ। डा॥ ११॥

ऋत्विजः "आ नि षीदत" स्तोतु मुपविशत। अथ "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत ततः अभिषुतं सोमं "यज्ञैः" यजनीयैः हविर्भिः मिश्रितैः "श्रिये" शोभार्थं "परिभूषत" परितोऽलङ्कुरुत। तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितरः † आभरणैरलङ्कुर्वन्ति तद्वत्॥ ३॥ १०२

* उ० ४,१,१८,१ = ऋ० ५,८,१ = जबे ३,१,११—७,१,१०— ८,१,११—९,२, १०—१८,१,२।

† 'मातरः'—इति वि०।

२ ३ ४ ५ 　१र १ 　२ २ 　५ 　१ र
औहोइतंवःसखा। योम। दायाऔ२३४वा। पुना

२ ६ 　२ 　२ ५ 　२ २ २ 　५
नमभिगा३। औ। हो२३४वा। यताऔहो२३४वा।

१ २ १ २ 　१र २ 　२ 　२ 　५ 　२ २
शिशुन्नच। व्यैःस्वदया३। औ। हो२२४वा। तगा

२ ५ 　२ ५
औहो२३४वा। तीऽ२३४भीः ॥ १७ ॥

५ 　र र 　५ 　२ र १ 　ऽर 　१
तंवःसखायोमदा६या। पुनानमभिगा२यत। शि

७ २ 　४र ५ 　२ २ 　१ ४ 　२
शुन्नहव्या३। व्यैःस्व। दया३। ता२३गू३। ता३४५इ

५
भो६वाइ ॥ १८ ॥ १०३

पर्वतनारदावृषी। हे "सखायः!" ऋत्विजः "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं "तं" सोमम् "अभिगायत" अभिष्टुत। तमिमं सोमं "शिशुं न" शिशुमिवा-लङ्कारैः क्षीरादिभिरलङ्कुर्वन्ति तद्वत्। "हव्यैः" हविर्भिर्मिश्र-यवैः "गूर्त्तिभिः" स्तुतिभिश्च * "स्वदयन्त" स्वादूकुरुत।

"हव्यैः"-"यज्ञैः"—इति पाठौ ॥ ४ ॥ १०३

---

* गूर्त्तिभिरिति अर्चति-कर्मणो (नै०३,१४) गूर्धयते रूपमिदम् भाष्यकारस्य। 'गूर्त्तिभिः उद्यमाने रथैर्धर्मैर्वा'—इति वि०।

अथ पञ्चमी।

३ १र २र३ १ २ ३ १ २ ३ २ ३ १ २
प्राणाशिशुर्महीनां हिन्वन्नृतस्य दीधितिम्।
३ १ २ ३ १ २ ३ २ १ २ ३ २
विश्वापरिप्रियाभुवदधद्विता॥ ५॥ १०४*

४ ५ ३ ५ १ २
(वाचः सामनी द्वे॥) प्राणा। शा२३४इशुः। महा
५ १ २ ५ २ १ २ २
२३४इनाम्। हिन्वा२ना२३४र्त्तां। स्या२दाइधी२तीम्।
२ २र१ १२र २१ २ २ २ १
वाइश्वापरि। प्रियाभुवा२३त्। अधद्विता३४२। औ२३
४५इ। डा॥ १९॥

४ ५ ४ ५ १ २ ऽ २
प्राणाप्राणा। शाइशु२: शाइशूः। महा३१उवाये३।
१ १.१.१ २ १ २ २
ना२३४५म्। हिन्वन्नार्त्तंस्यदा३१उवाये३। धीर३४
५ १ र २ ५ २
तीम्। विश्वापारिप्रिया३१उवार३। भू२३४वात्। अधी
१ २ १ २ ५र र
२। द्वी२। ऊवाये३। द्वा२इता२३४औहोवा।
२ ५
ऊ३२३४पा॥ २०॥

* ऊ० ३,१,१८,१ = ऋ० ७,५,४,१ = कवे ३,१,१२—४,१,१— ७,१,१०—७,१,२१—९,१,१४—९,१,१—११,१,५—१५,१,८—१६,१,८।

४र ५र ४ २ १ र
(इन्द्रसामनी द्वे ॥) प्राणाग्निभूः। मद्दाऽ२इनाम्।
र ५ १ र २ १ १
औहोइवा। छिन्धन्नतस्यदीधितिम्। वाइस्वाउवा।
१ १ १ २ २ २ १
पाराउवा। प्रिया२भुवत्। अधाउवा३। ए३। हिता१
॥ २१ ॥

५र र ३ ४ ५ १ १ १
प्राणा। हो३इ। इयाहाइ। भाइभुमंहाइ। ना
२र३ २र३ ऽ २ १ र
२३म्। आउहाउ। हो३वा। छिन्धन्तस्यदीधिता-
२र३ २र१ ऽ २ १ र २र२र२ १
इम्। आउहाउ। हो३वा। विश्वापा। यौउहाउ।
ऽ २ १ १ ३ ४र र १ २ ३
हो३वा। प्रिया२३। भूर्वार३४औहोवा। अर्धह्वि
२
ता१ ॥ २२ ॥

५र र ३ २ २ ५
(मरुतां प्रेङ्खम्॥) प्राणा। हहोइ। आ२३४इभूः।
३ २ २ १र १ २ १ २ ५
हहो३इ। महीना२३म्। होवा३होये३४। छिन्धन्।
३ २ ३ ५ ३ २ २ १र
हहोइ। आ२३४र्ता। हहो३। स्यदीधिता२३इम्।

१ २ १ २ ५ र ३ २ १ ५ २ १
होवा३होयि३४। विश्वा। हवोइ। पा२३४री। हवो

२ १ २ १ ४
इ। प्रियाभूवा२३त्। होवा३होयि३। वा२३४वा३।

२ ५
हा३४५इतोई३हाइ॥ २२॥ १०४

चितऋषिः*। "माणा" यज्ञं कुर्वाणा इत्यर्थः †। "महीनां" महतीनां मंहनीयानां वा अपां ‡ "शिशुः" स्थानीयः सोमः ¶ "ऋतस्य" यज्ञस्य "दीधितिं" दीप्तिमन्तं प्रकाशकं वा स्वीयं रसम् "हिन्वन्" प्रेरयन् §। "विश्वा" सर्वाणि "प्रिया" प्रियाणि हवींषि "परि भुवत्" परिभवति व्याप्नोति। अपि च "द्विता" द्विधा भवति ||। दिवि पृथिव्यां च वर्त्तत इत्यर्थः। +

"माणा"-"क्राणा"—इति पाठः॥ ५॥ १०४

* "चाक्षुः"—इति ऋषि-मे०।

† भाष्यकारस्तु क्राणाइति ऋग्वेदीयपाठमनुसृत्यैवं व्याख्यातवान्; तथाच यास्कः —"गोभिः क्राणा अभूवत—गोभिः कुर्वाणा अभोवत"—इति ४,१९। सामवेदीय-पाठस्तु माणाइति अतएव 'माणभूताः'—इति विवरण-व्याख्यानम्।

‡ 'अपाम्'—इति वि०।

¶ 'शिशुः प्रशंसनीयः—इति वि०।

§ 'व्याप्नुवन्'—इति वि०।

|| 'द्वैतवर्णा सोमदेवता एव'—इति वि०।

+ 'विनियोगोऽस्य षष्ठे ऽवाणि'—इति वि०।

अथ षष्ठी।

१२ २१२ २१२ १२ ३१२
पवस्वदेववीतयइन्दोधाराभिरोजसा।

२३ १२
आकलशम्मधुमांत्सोमनःसदः॥६॥१०५ *

(प्राजापत्ये द्वे॥) पवस्वद्वा२इ। ववीता२३४याइ।
आइन्दोधारा२। भिरोजा२३४सा। आकालशाम्।
माधूमा२३४०त्सो। मनएमाना२३ः। सदापुए। होपु
इ। डा॥२४॥

पवस्वदा। ववीतयाइ। इन्दोधार२रा३४। भिरो
जसा३ए। आका३ला। लाशा२म्। माध२वाइ।
मांत्सोर३। मनोर३४वा। सा५दो५वाइ॥२५॥१०५

मनुर्ऋषिः †। हे "इन्दो" सोम! "देववीतये" देवानां भक्ष-

---

* उ० ५,१,१७,१=ऋ० ७,५,१०,४=अवे५,१,१७—११,२,१९—९,९,४—२४,१,१२।
† "आप्सवः"—इति ऋषि-मे०।

अथ सप्तमी।

१ २ ३ २३ ३र ३ २३ १ २
सोमः पुनानऊर्म्मिणाव्यंवारंविधावति।

१ २ ३ १र२र४ ३ १ २
अग्रे वाचःपवमानःकनिक्रदत्॥ ७ ॥ १०६ *

५र २र १ २
(सुमाने द्वे॥) सोमःपुना। नऊर्मिणा। अव्यं

२ र १ २र १ १
वारा२म्। विधावताइ। अग्रेवाचा२ः। पव। मा२

३ ५र र १ २ र१२ ११११
२ना२३४औहोवा। कनिक्रदढेउपा२३४५॥ २६॥

५र २र १ २ १ ३ ५र
सोमःपुना। नऊर्मिणोवा३। ओ२। वा२३४। औ

र १ र २र ३ १ १ २ १
होवा। अव्यंवारंविधावति। अग्रे३। होवा३। हो

याय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" क्षर। हे "सोम" "मधुमान्" मदकररसवांस्त्वं "नः" अस्मदीयं "कलशं" द्रोणाख्यम् "आसद" आसीद। [सदेर्लङ्रूपम् †॥ ६॥ १०५

* उ० ३,१.१८,१=ऋ० ७,५,१०,५=कवे २,२,१७—७,२,९—९,३,४—१५,२,११।
† 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।

२ ५र र २र१ १र ३ १
२। वा२३४। औहोवा। वाचःपवमानः। कना३।

१ २ १ २ ५र र २ ५
होवा३। हो२। वा२३४। औहोवा। क्रा२३४दात् ॥२७॥

४र५ र ४ १ र
(द्यौते द्वे ॥) सोमःपुनानऊ। मिणा। अव्यवारं-

२ १र १ १ र र २ १ र २ ४ ५
विधावार३ती। अग्रे वाचाः। पवमानाः। का३निक्र।

२ १ १ १ १
दा२३४पूत् ॥ २८ ॥

१र र र २ ५र १ र र २
सोमःपुनानऊर्मिणा२३४ऐही। अव्यंवारंविधावता

५र २ र र र २ ५र ४ ५ २
२३४ऐही। अग्रेवाचःपवमाना२३४ऐही। कानी। क्र

५ ५ ४
ददे३४। धियाई३हा। होपूइ। डा ॥ २९ ॥

१र ४ ५ र १ २ ३ ५
(आतीषादीये द्वे ॥) सोमःपुना। नऊ३२र्मो२३४णा।

१ २र १ २ १ ऽ २ ५
अव्यंवारम्। विधावति। अग्रा३२इ। वा२३४चाः।

१ ऽ २ ५ २ २ ४
पवा३२। मा२३४नाः। कना३इक्रा५दा६५ईत् ॥ ३० ॥

अथाष्टमी।

१ २ ३ १ २ ३ १ ३ १ २ ३ १ २
प्रपुनानायवेधसेसोमायवचउच्यते।

३ १र २र ३ १ २ ३ १ २
भृतिन्नभरामतिभिर्जुजोषते ॥ ८ ॥ १०७ *

३र ४ ५ र २ ३ ४र ५ ५ १ र २
सोमःपुना। हो। नऊर्मिणा६ए। अव्यंवारविधा

र २ २ २ ११११ ११ २
१वा३ती। अग्रेवा२३४५। चा२३४५ः। पवमा२३ना३ः।

१ २ ५र र २ २११११
का२ना२३४औहोवा। क्रदे२३४५ ॥ २१ ॥ १०६

अग्निर्ऋषिः †। "पुनानः" पूयमानः "सोमः" "ऊर्मिणा" स्वीयया धारया "अव्यम्" अविभवं "वारं" वालं पवित्रं "विधावति" विविधं गच्छति। कीदृशः? "पवमानः" पूतः "वाचः" स्तोत्रस्य "अग्रे" "कनिक्रदत्" पुनः पुनः शब्दं कुर्वन् विधावति ‡ ॥

"अव्यम्"—"अव्यः"—इति साम्न ऋचः पाठः ॥ ७ ॥ १०६

---

* ऋ० ७, ५, ६, १।

† "चाक्षुषः"—इति ऋषि-क्रमे०।

‡ दाधर्त्ति दर्धर्तीत्यादिना (पा० ७, ४, ६४) सिद्धम्।

¶ 'विनियोगोऽस्य चतुर्थ्यऋचि'—इति वि०।

१ १ ४र ५र
(सामनामानि चत्वारि॥) प्रपुनार२३नायवेधसाइ।
१ र र ७ १
चोइ। चोइ। सोमायवचाउच्याता२इ। भृतिन्नभरा
७ १र २ १
मतिभा२इः। जुजोषा२३ता३४३इ॥ श्री२३४५इ। डा
॥ ३२॥

४ र र र ४ १र १ २ २
प्रपुनानौचोप्५यवेधसाइ। सोमाश्रौ३चो३४। यव
५ ४ २ १ २ २ ५र ४ २
चउच्यताइ। भृताश्रौ३चो३४। नभरामतिभाइः। जु
५
जा३१उवा२३। षा२३४ते॥ ३३॥ १०७

द्वितो नाम ऋषिः* स्वात्मानं प्रत्याह। "पुनानाय" पवित्रेण पूयमानाय† "वेधसे" कर्मणो विधात्रे सोमाय‡ "वचः" स्तोत्र-लक्षणं "प्रोच्यते" त्वया प्रोच्यताम्। किञ्च। "मतिभिः" स्तुतिभिः "जुजोषते" प्रीयमाणाय स्तुतिं "प्रभर" प्रकर्षेण धारय। तत्र दृष्टान्तः। "भृतिन्न" यथा भृतकाय भृतिं सम्पादयति तद्वत्।

"वच उच्यते"-"वच उद्यते"—इति साम्न ऋचः पाठः।
॥ ८॥ १०७

* "आप्त्यः"—इति ऋषि-नि०।

† 'सोमपानाय'—इति वि०।

‡ 'मेधाविने सोमाय'—इति वि०। "वेधाः"—इति मेधाविनामसु पठं नैघण्टुकम् ३,१५।

अथ नवमी।

१ २ ३ १ २ ३ १ २
गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव।

१ २ ३ २ ३ १ २ ३ १ २
शुचिञ्च* वर्णमधिगोषुधारय॥ ९॥ १०८ †

३ ५ २ ३ ४र ५ ५ १
गो४मन्नः। होइ। इन्दोअश्ववा३इदे। सुतःसुदक्ष

२ २ २ १ २ २ २ १र २
धा१नी३वा। शुचिञ्चवा२३४५। र्णमधिगो२३४औहो

३ ५ २१ २ ४ ५ ४
वा। षु२३४धा। रया। औ३होवा। हो५इ। डा॥

॥ २४॥ १०८

पर्वतनारदावृषी। हे "सुदक्ष" सुबल! हे "इन्दो" सोम। "सुतः" अभिषुतस्त्वं "नःअस्माकम्"‡ "गोमत्" यज्ञ-साधन-गो-युक्तं धनं "धनिव" धन्व [ वर्णविकारः ¶ ] गमय [ धन्व-तिर्गत्यर्थः § ] ततो हं "शुचिं" पूतन्दीप्यमानं "वर्णं" रसञ्च "गोषु" क्षीरादिषु "अधिधारय" अधिकं प्रापयामि॥

* "ते"—इति क०।

† उ० ७,३,२०,१=ऋ० ७,५,८,४=अहे १२,१,१४—१७,१,२—१८,२,६।

‡ 'नः अस्मभ्यम्'—इति वि०।

¶ "अत्ययोपलक्षम् (३,४,९८)"—इति पाणिनी-सूत्रस्य-सुप्तिङ्क्त्यादिवचने-नेत्यर्थः।

§ नि० नै० २,१४,६४।

अथ दशमी ।

२ १ २  ३ १२ ३ १२  ३२
अस्मभ्यन्त्वावसुविदमभिवाणीरनूषत ।
१ २ ३ १ २ ३ १ २
गोभिष्टे वर्णमभिवासयामसि ॥ १० ॥ १०९ *

४ ५ २ ५ २ ३ ५
धावास्मा । भ्यार२३४न्त्वा । वाश्वी२३४दाम् ।
१ २ ५ ३ १ २ ५ २ ५
आभार२इवार२३४णीः । अनाओ२३४वा । षा२३४ता ।
१२ २ २१ २ २ २ १ २ २ २
गोभिष्टें व । णमभिवा२३ । सयामसिश्वो२३४५इ । डा ॥
॥ ३५ ॥ १०९

"धनिव"-"धन्व"—इति, "धारय" "दीधरम्"—इति च छन्दोग-बह्वृचानां पाठभेदः ॥ ९ ॥ १०८

पर्वतनारदावृषी । सोम! "वसुविदं" धनस्य दातारं "त्वा" त्वाम् "अस्मभ्य" धनादिदानार्थं "वाणी:" अस्मदीयावाचः "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने ( अदा०प० ] । वयं "ते" तव "वर्णम्" आवरकं रसं "गाभिः" गो-विकारैः क्षीरादिभिः "अभिवासयामसि" अभिवासयामः अभित आच्छादयामः ॥ १० ॥

---

* ऋ० ७,५,७,४ ।

अथैकादशी।

१२ ३२उ ३१ २१२ ३१ २
पवतेहर्यतोहरिरतिह्वराᳪसिरᳪह्या।
३क२र ३ १२ ३२३१२
अभ्यर्षस्तोतृभ्योवीरवद्यशः॥ ११॥ ११०

५ र २१र २
(यशाᳪसि त्रीणि॥) पवतेहा। र्यतोहरिः। औ
२ ३ ५ १ २१५र १ २र
३होइ१इ। औरहोर३४वा। आतिह्वरा२ᳪसिरᳪह्विया।
२र २ ३ ५ २ १० र १२र१
औहोौ२१इ। औरहोर३४वा। अभ्यर्षस्तोतृभ्योवा।
२ २ ३ ५ १ ३ ५र र
औ३होर१इ। औरहोर३४वा। रा२वार३४औहोवा।
१र १३११११
यशोयशार३४५ः॥ २६॥

३२ ४ ५र २१र २र१ ५
पवा३। पवतेहा। र्यतोहरिः। औहोइ। औ३
२ २र२ १ २१५र १ २ र र १
होइ। औहोइ। आतिह्वरा२ᳪसिरᳪह्विया। औहो
५ २ २र २ १२र १२र१ २र
इ। औ३होइ। औहोइ। अभ्यर्षस्तोतृभ्योवा। औ

* उ० १,२,२२,२=ऋ० ७,५,११,२=ऊहे १,२,१६—६,२,१५—९,२,१६—९,२,२=ऊह्य २,१,१६।

हो६। औ३हो६। औहो३। ता२वा२३४औहोवा।
यशोयशा२३४५ः॥ ३७॥

पवतेहर्यतः। हरीः। आ२३४। तिह्वरा६सिर।
हिया। अभ्यर्षा२३४। स्तोत्र। भ्योवा३६। ता२वा
२३४औहोवा। या२३४शाः॥ ३८॥ ११०

असितोवाक्षुप ऋषिः। "हर्यतः" स्पृहणीयः* "हरिः" हरितवर्णः सोमः "रंह्या" [तृतीयाया आकारः†] साधु वेगेन "ह्वरांसि" कुटिलानि मनूंजूनि पवित्राणि "अति पवते" अतीत्य गच्छति। अथ प्रत्यक्षस्तुतिः—हे सोम! त्वं "स्तोतृभ्यः" "वीरवत्" पुत्रयुक्तं "यशः" "अभ्यर्ष" अभिगमय प्रयच्छेत्यर्थः‡।

"अभ्यर्ष"-"अभ्यर्षन्"—इति साम्न ऋचः पाठौ॥ ११॥ ११०

---

* 'हरिभिर्यन्ता'—इति वि०।

† "सुपांसुलुक् (७,१,३९)"—इत्यादिनेति भवः।

‡ 'विनियोगोऽस्य प्रथमेऽहनि'—इति वि०।

अथ द्वादशी।

२ १ २ ३ १ ३ १ १ ३ १ २
परि कोशं मधुश्चुतꣳ सोमः पुनानो अर्षति।
२ ३उ ३ १ २ ३ १ २
अभि वाणीर्ऋषीणाꣳ सप्ता* नूषत॥ १२॥ १११ †

॥ तृतीय-दशति॥

२ १ २ ४ ५ १र
(भारद्वाजम्॥) परिकोꣳशम्मधुश्चुताम्। सोमः
२ र१र २ १ २ २ २ २र १ २र
पुनानोअर्षति। द्वोयेꣳ। अभिवा२३४५। णीर्ऋषी
र १ २ ३ ५ २ ५
णाꣳस। प्तानोआ२३४वा। षा२३४ता॥ ३८॥१११

॥ इति अर्द्धःप्रपाठकः॥

द्वितऋषिः‡। सः "पुनानः" पूयमानः सोमः "मधुश्चुतं" मधुर-रसस्य च्यावयितारं द्रोणकलशं प्रति आत्मीयं रसं "पर्यर्षति" परि गमयति। तमिमं सोमम् "ऋषीणां" "सप्त वाणीः" सप्तच्छन्दांसि¶ "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने कुटादिः (प०)।

* "सप्त"—इति ऋ०।

† ऋ० ७,५,६,२।

‡ "आप्त्यः"—इति ऋषि-मै०।

¶ गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती चेति सप्तच्छन्दांसि।

"सोमः पुनानो अर्षति"-"अव्यये वारे अर्षति"—इति साम्न ऋचः पाठो॥ १२ ॥ १११

इति श्रीमत्सायणार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य दशमः खण्डः॥

॥ इत्यौष्णिहम् ॥

—:○:—

स्वः पवस्वेति खण्डेऽस्मिन्नृचोऽष्टौ ककुभोऽत्र तु ।
"ससुन्वे"-इति गायत्री यवमध्येति* केचन ।
अक्षरव्यूहनादेषा ककुबेवेति केचन ।
"एष धारयासृतः" प्रगाथः काकुभोऽन्तिमः ।
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे ॥

तत्र एकादशे खण्डे—

सैषा प्रथमा ।

१ २ ३ १ २   ३१ २   ३१ २३ १ २
पवस्वमधुमत्तमइन्द्रायसोमक्रतुवित्तमोमदः ।
१ २ ३ १ २ ३ १ २
महिद्युक्षतमोमदः ॥ १ ॥ ११२

---

* "विपरीता यवमध्या (पि० ३, ५८)" यदाद्यन्तौ पादौ लघ्वक्षरौ भवतः मध्यमश्च बह्वक्षरः तदा यवमध्येति कथ्यते।

१ छ० १,१,१६,७=ऋ० ७,५,१७,१ = ऊहे १,१,६—७,१,८—९,२,७—१०,१,५—१०,२,५—१३,१,४—१३,२,१८—१४,१,८।

४ ५ १ २
ओम्॥ (वासिष्ठम्॥) पावा। स्वमाधुमा। तामा

३ ५ १ ५ २र १ २र१ २
ओ२३४वा। ई२३४न्द्रा। यसोमक्रतुवित्तमोमदा३ः।

१ १ २ ५ १ १ २र १ १ १११
ओइ। माद्धाओ२३४वा। द्युत्तमोमदा२३४५ः॥ १॥

१ ५ ४ ५ ५ १
(सफम्॥) पा३४। वस्वम। धुमत्ता६माः। आ

१ १ २ ४ २ २
इन्द्रा२। यसोमा२। क्रतुवाइत्ता३मो३। मा३दाः।

१ २ ४ २ ५
मद्दिद्युत्ताता३मो३। मा३४५दोई्डाइ॥ २॥

४ ५ ४ ५ र ४ १ र र २
पवस्वमधुमा। इडा। तमः। इन्द्रायसोमक्रतुवित्त

१र १ १ २ १ २ १ १ १र
मोमा२३दाः। इडा। मद्दाइद्यु२३त्ता। इडा। तमो

२ १
मा२३दा३४३ः। ओ२३४५इ। डा॥ ३॥

४ ५ ४र ४ १
(वासिष्ठम्॥) पवस्वमा। ए५। धुमा। तमाः।

२र १ २ २ १ २
इन्द्रायसो३। हा। औ३हो। माक्रातवो२३दा३।

अथ द्वितीया।

३ २ ३ १ ३ २उ ३ १ २   ३ १ २   ३ २
अभिद्युम्नम्बृहद्यशइषस्पतेदिदीहिदेवदेवयुम्।

१र २र ३ १ २
विकोशम्मध्यमंयुव॥ २ ॥ ११३ *

१ २ १ २ २ २ १ १ २ २ १ २
हा। औ३हो३४। तमो३४मदाः। महाये३। द्यू२म्ना ३

५र र २ र १ २ १ १ १ १
३४औहोवा। तमोमदा२३४५ः॥ ४॥

१ १ २ ४ ५ २ ३ ५ २ १ र
(सफम्॥) पवस्वा३मधु। मत्ता२३४माः। इन्द्रा

२ १ १ २ ४ २ ५ २ १
यसोमा २। क्रतुवाइत्ता३मो३। मो३२३४दाः। महा

२ ४ २ ५
इ। द्यु म्नाता३मो३। मा३४५दौहोवाइ॥ ५॥ ११२

गौरिवीतिः ऋषिः†। हे "सोम"! "मधुमत्तमः" अतिशयेन माधुर्योपेतस्त्वम् "इन्द्राय" इन्द्रार्थं "मदः" मदकरः सन् "पवस्व" क्षर। कीदृशः? "क्रतुवित्तमः" अत्यन्तं प्रज्ञायाः कर्मणो वा लम्भकः "महि" "महान्" मंहनीयो वा "द्युम्नतमः" अत्यन्तदीप्तः "मदः" हृष्टः॥ १ ॥ ११२

* उ० ३,२,१७,१=ऋ० ७,५,१८,४ = ऊहे ३,१,९—५,१,१—८,१,१२—१४,२,१४

† "आङ्गः"—इति ऋषि-मे०।

१ १ २ ४ १
( ऐषिराणि चत्वारि ॥ ) अभाइ। द्यु म्नाऽम्वृ३ह
१ ५ .२ १ २ र र ४ १र३ ५ २ १
द्यग्नः। इषाः। पतेदिदीहिदे३वा३देवयुम्। विको।
२ १ २ ४
अग्न। ध्यमाइ०यूपूवाई५ई॥ ६॥
५ ४ १ २ १ र १
आ। भ्येद्युम्नाम्। वृहाद्या१ग्ना२ः। इषास्पता
१ २ १ ५ १ १ १ ५ २
इ। दीदीहा२३४इदे। वदाइवा२३४यूम्। विकौवा
२ ५ १ २ ५
बो२३४वा। अग्नध्यभा२१उवा२३। यू२३४वा॥ ७॥
५ ४ ५ ४ ५ ४ १ र र
अभिद्यु म्नम्वृहत्। इषा। यग्नः। इषस्पतेदिदीहि
र २ १र २ ६ १र २ १ ऽर १ २
देवदेवा२३यूम्। विकौहोवा३हाइ। अग्ना२ध्यमंयुव।
१ २ १
इवा२३भा३४३। औ२३४५। डा॥ ८॥
५ ५ २ १ १ र १
अभिद्यु म्नम्वृ ईहद्यशाः। इषस्पताइ। दिदीहिदा
१र १र र १
इ। वादेवयूम्। विकोग्नध्यमा२३९होइ। यू२३४
ऽ ५र ५ ४
वा। एहियाइहा। हो५इ। डा॥ ९॥ ११३

अथ तृतीया।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम्।

२ ३ १ २ ३ १ २
वनप्रक्षमुदप्रुतम् ॥ ३ ॥ ११४ *

ऊर्ध्वसद्मा ऋषिः†। हे "ब्रह्मस्पते" मन्त्रस्य पते! हे "देव" स्तोतव्य सोम! "देवकामं" त्वां वय मभिष्टुम इति शेषः। किञ्च। त्वं "द्युमं" द्योतमानं "बृहत्" प्रभूतं "यशः" अन्नम् अन्नाद्यम् "अभिदीदिहि" आभिमुख्येन प्रकाशय प्रयच्छेत्यर्थः [आमन्त्रितस्याविद्यमानत्वेन ‡ पादादित्वान्न निघातः¶] किञ्च "मध्यमम् §" अन्तरिक्षस्थितं "कोशं" मेघं ‖ "वि युव" ह्यर्थं अस्मत्र विश्लेषय + ॥

"देवयुम्"-"देवयुः"—इति पाठौ ॥ २ ॥ ११६

* उ० ६,२,६,१=ऋ०७,५,१८,१=कचे २,२,१—७,१,१७—१२,१,११।

† "आङ्गिरसः"—इति ऋषि-नै०।

‡ "आमन्त्रितं पूर्वमविद्यमानवत्"—इति पा० ७,१,२८।

¶ "आमन्त्रितस्य च (पा० ८,१,१९)"—इत्याष्टमिको निघातो न, अपितु "आमन्त्रितस्य च (पा०६,१,१९८)"—षाष्ठाद्युदात्तत्वमेवेति भावः।

§ 'मध्यमं मध्यमे सवने'—इति वि० माध्यन्दिनं इति तस्यार्थः।

‖ "कोशम्"—इति मेघनामसु विंशतमं नैघण्टुकम् १,१०।

+ 'विनियोगोऽस्य पञ्चमेऽर्थिव'—इति वि०।

(काण्वंअवसानि चीणि॥) आसोतापा। रा२इ

षा२३४औहोवा। वा२३४ता। अश्वन्नस्तोममप्रुरा२९र

जस्तुरम्। ओयि३। वना३। ओये। प्रक्षा३४।

औहोवा। उदप्रुता२३४५म्॥ १०॥

आसोतापा। रिषि। चता२। ऊ२। हा२इ।

ऊ२। अश्वन्नस्तोमम। प्रुरा२म्। ऊ२। हा२इ।

ऊ२। रज। स्तुरा२म्। ऊ२। हा२इ। ऊ२।

वन। प्रक्षा२म्। ऊ२। हा२इ। ऊ२। उद।

प्रूरता२३४औहोवा। ऊ२३४पा॥ ११॥

आसोतापा। रि। षाइ। चता। अश्वान्नस्तो।

मामप्रू२३४राम्। रजास्तू२३४राम्। वनोवाइ। प्रा

क्ष ामूउदा। इम्मायेउ। प्रू२३४ताम्॥ १२॥

(वाचःसामानि चीणि॥) आसोतापारीइ षिञ्चता।

आश्वाओ२३४वा। नस्तोममप्सु रार९रजस्तुरा२३म्।

होइ। वानाओ२३४वा। प्रचमुदप्र ता२३४म्॥ १३॥

आसो३४औहोवा। तापराइषिञ्चाता२। आश्व-

नस्तो। मामप्सूरा२म्। रजास्तू२३४राम्। वनौ

होइ। प्राचमुदा३१उवा२३। प्रू२३४ताम्॥ १४॥

आसोतापा। हो। रिषिञ्चताइ९। आश्वनस्तो

मामप्सूरा२म्। राजस्तुरम्। वानप्राक्षा२३म्। ऊ

२३दा३। प्र३४५तोईहाइ॥ १५॥

ऋजिश्वा ऋषिः*। हे ऋत्विजः! "आ सोत" सोम मभिषुत [षुञ् अभिषवे (स्वा०उ०) लोटि छान्दसो विकरणस्य लुक्†

* "भारद्वाजः"—इति ऋर्ष-जे०।

† "बहुलंछन्दसि (२.४,७३)"—इत्यादिनेति भावः।

अथ चतुर्थी।

२ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
एतमुत्यम्मदच्युतᳫं सहस्रधारंवृषभन्दिवोदुहम्।

३ १२ ३ १ २
विश्वावसूनिबिभ्रतम्॥ ४ ॥ ११५ *

(कौल्मलबर्हिषे द्वे ॥) ४ ५ एताम्। १ ऊत्याम्। ० मदा

२ ५ २ १ १ १ २ २
रच्यू२३४ताम्। सहास्रधा। रांवृषभा३म्। दिवौ

"तमनममयनाय (पा०७,१,१४५)"—इति तस्य तबादेशः] किं च। "परि षिञ्चत" परितः वसतीवर्य्यादिभिः सिञ्चत। कीदृशम्? "अश्वं न" अश्व मिव वेगिनम्। "स्तोमं" स्तोतव्यम् "अप्तुरम्" † अन्तरिक्षस्थितानां मुदकानां प्रेरकं "रजस्तुरं" तेजसां वा प्रेरकम। "वनप्रक्षम्" उदकैः सम्पृक्तम्। यद्वा। काष्ठेषु पात्रेषु चारकं प्रकीर्णम् "उदप्रुतम्" उदकं गच्छन्तं प्लवमानं सोम मभिषुत अभिषिञ्चत॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति साम्न ऋचः पाठौ॥ ३ ॥११४

---

* ऋ० ७,५,१८,१।

† 'तरति तम्'—इति वि०।

‡ 'विनियोगोऽस्य तृतीयेऽचि'—इति वि०।

२ ५ १ २
२दु२३४हाम्। विश्वा२हौ१इ। होइ। वा२३ख३।
१ २ ५र र २ ५
ना२इवा२३४औहोवा। भ्रा२३४ताम्॥ १६॥

४ ५ ४ ५ २ ५
एतामूत्याम्। मदा३१ओवा२३। च्यु२३४ताम्।
२१ २र १ २र्१२ ४ ५ ४ ५ २
सहस्रधारंवृषभन्दिवोदुहा२३म्। वाइश्वावाख। निवा
२ ५
३१ओवाये३। भ्रा२३४ताम्॥ १७॥

५र ४ ५ ४ ४ १
(मह्न॥) एतमुत्यम्। ए५। मदा। च्युताम्।
र २ १र २ १ १
सहस्रधारंवृषभंदिवोदू२३हाम्। वाइश्वा२वाख२३।
४ ५
निवो२३४वा। भ्रापूतो६हाइ॥ १८॥
५र ४ ५ ४
(कौल्मलबर्हिषाणि चीणि॥) एतमुत्यम्। ओ
५ ४ ५ ४ २ २ ५
हाइ। मदच्युतम्। ओहाइ। साहस्रा३३४धा।
१ २ ५ २ र २ ५ १
रवार्षा२३४भाम्। दिवोदुहमे२३४हाइ। विश्वा२हा

१इ। वा२३ह३। ना२इवा२३४औहोवा। आ२३४

ताम्॥१९॥

एतामुत्यम्मदाच्युताम्। सहस्रधा। रांवृषाभा-

२म्। दिवो२। दुहमोइ। विश्वावसूनिबा२३होइ।

भ्रातमा३१उवा२३। ऊ२३४पा॥२०॥

एता३४म्। उत्यम्मदा। च्यूताम्। सहस्रधार२

वृ। षभम्। दिवो२३१२३। दू२३४हाम्। विश्वा

वसूनिबा३भोये३। आ२३४ताम्। एहियाइहा। होपुइ।

डा॥२१॥११५

ऋतयश्चाऋषिः*। "दिवः" देवान् कामयमानाऋत्विजः†।

---

* "आङ्गिरसः"—इति ऋषि नै०।

† 'दिवो दुहम—दिव आहृत्य इमं लोक मुदकेन पूरयति'—इति वि०।

अथ पञ्चमी ।

१ २ ३ १र २र३ २ ३ १ २ ३ १ २र
सस्तुन्वेयोवसूनांयोरायामानेतायइडानाम् ।

२ ३ १ २ ३ २
सोमोयःसुक्षितीनाम् ॥ ५ ॥ ११६ *

४ ५ १र र २ १
(दीर्घम् ॥) साहू । न्वेयोवसू२३नाम् । योरा

१ र र १ २ १ २ १
२यामा२ । नेतायइडा२३नाम् । सो२३माः । यःसु

२ १ ५ ५
क्षिता२३४इनो६हाइ ॥ २२ ॥

"एतं" "त्यनु" सोममेव "दुहम्" अदुहन् [दुहेर्लिङि रूपम्†] दुहन्ति स्म [छान्दसो नकारस्य मकारः ‡। "ग्रावाणो वत्सा ऋत्विजो दुहन्तीति" तैत्तिरीयकब्राह्मणम्] कीदृशं सोमम्? "मदच्युतं" मदस्य प्रेरकं "सहस्रधारं" बहुधारम् "वृषभं" कामानां वर्षकं "विश्वा" सर्वाणि "वसूनि" धनानि "बिभ्रतं" धारयन्तम् ॥

"दिवोदुहम्"—इति, "दिवं दुहुम्"—इति पाठौ ॥ ४ ॥११५

---

* उ० ४,१,१८,१=ऋ० ७,५,१९,२=ऊह० ३,२,१—२७,१,१४ ।

† "दुह प्रपूरणे"—धदा० प० ।

‡ "व्यत्ययो बहुलम् ( पा०३,४,९८ )"—इत्यनेनेति भावः ।

४ ५ १२ २ २

(सोमसाम)॥ सत्तुद्वाउ। न्वेयोवद्धना२३९

२ १ १ २ २ १ २ २

द्वाउ। योरा२यामा२। नेतायः। इडाना२३९द्वा

१२ २ २ १ १२ २२ १ ४

उ। सोमोयःसु३द्वाउ। चितीनाम्। औ२३हो

५ ४

वा। होपुइ। डा॥ २३॥

४ ५ १ २

सोमसामानि चीणि॥) सः। स्वेसाद्ध। न्वेयो

२ १ १ १ १ १२ ५२ १२ ५२ २ १२

वसा३१उवा२३। ना२३४५म्। योरा२यामा२नेताय

१ ५२ २ १ २ ५ १ २

इडा२ना३म्। सोमौवाओ२३४वा। यःस्तुचिता३१उ

२ १ १ १ १ १

वाये३। ना२३४५म्॥ २४॥

२ १ ४२ ५२ २२ १ २ २ २

सस्तुन्वे२३योवद्धनाम्। योराया१मा२३ने। ताय

१ १२ ५२ १ २ २ १ २

इडा२३४५ना६५६म्। सोमो२यःस्तुचितीनाम्। सो

१ १ १ १

मा२३४५ः॥ २५॥

४ ५ २ २ ४ ५ २२ १ २ २ २ २

सस्तुन्वयाः। एवाद्ध। नायोरा१या२३मा। नेता

अथ षष्ठी ।

२　१ २ ११२　२१ २　२१२
त्वᳲ ह्या३ङ्ग*दैव्य†म्पवमानजनिमानिद्युमत्तमः ।

२　१ २ ३ १ २
अमृतत्वायघोषयन् ॥ ६ ॥ ११७ ‡

१　२　१२ २　१　२　१
यद्वा३इना३४म् । सोमा३ः । यःसुक्षि । ता२३४५इ ।

२ ११११
ना२३४५म् ॥ २६ ॥ ११६

ऋणवऋषिः¶ । "यः" "सः" "सोमः" "सुन्वे" अभिषुषुवे ऋत्विग्भिः § । यः सोमः "वसूनां" धनानां "आनेता" यश्च "रायां" [रान्ति प्रयच्छन्ति क्षीरादिकमिति] रायो गावस्तेषा मानेता विद्यते यश्च सोमः "सुक्षितीनां" शोभन-मनुष्याणाम् ‖ आनेता सोऽभिषुतोऽभूदिति + ॥ ५ ॥ ११६

---

* "आऽङ्ग"—इति
† "देवा"—इति च } ऋ०-पाठौ ।

‡ उ० ३,१,१७,१ = ऋ० ९,५,१०,३ = जके १,२,११—५,१,२६—११,२,१८—१९, ६,११ ।

¶ "आङ्गिरसः"—इति ऋषि-नै० ।

§ "सुन्वे सुमः'—इति वि० ।

‖ "क्षितयः"—इति मनुष्य-नामसु षष्ठं नैघण्टुकम् २,३ ।

+ 'विनियोगोऽस्य षष्ठेऽहनि'—इति वि० ।

५ २
( ग्रैतोष्माणि चत्वारि ॥ ) त्वꣳह्यिया। गदाइवियप

२ २ १ १ १ १
वमानजनिमानीइद्युमा२। तामा२ः। आमा२र्त्ता

२ १ ५ ४ ५
त्वा२३। यघो२३४वा। षा५योईचाइ ॥ २७ ॥

५ २ १ २ १ २२ १ २ २
त्वꣳह्यिया। गदाइविय। पवमान। होवा३हाइ।

१ २ ५ २ २ १ १
जनिमार३नी३४। द्युम। ता३माः। अमार३। ता

३ ५२ २ २ १ १ १ १ १
र्त्वा२३४औहोवा। यघो३षया२३४५न् ॥ २८ ॥

४ ५ ४ १ २ २ २ १
त्वꣳह्याङ्गदा। विय। पवमानजनिमानिद्युमत्ता२

२ १ २ २ १ ५ ४
३माः। अमार्त्ता२३त्वा३। यघो२३४वा। षा५यो६

५
हाइ ॥ २९ ॥

५ २ ४ ५ ४२ ५ २ १ १ २ १ १
त्वꣳहो३यङ्गदैविया। पवमा२ना। जनिमा२ना

२ ५ २ २ १ २ २ २ १
ये३४। द्युम। ता३माः। अमार्त्ता३त्वा३। यघो२

५ ४ ५
३४वा। षा५यो६हाइ ॥ ३० ॥ ११७

अथ सप्तमी ।

२१　१र　३२३१२　३१२
एषस्यधारयासुतोव्यावारेभिःपवतेमदिन्तमः ।
१२३१२१२
क्रीडन्नूर्मिरपामिव ॥ ७ ॥ ११८ *

(गायत्रपार्श्वम् ॥) एषा: । स्याधारया३१उवा २३ । सू२३४ताः । अव्या२वारेभिःपवतेमदिन्तमः । क्री डानू१मी२ः । अपा३म् । इ२३वा३ । आइ्वा२३४५ ॥ ३१॥

ग्रतिःऋषिः † । हे "पवमान" पूयमान सोम ! "द्युमत्तमः" अतिशयेन दीप्तिमान् "त्वं हि" त्वमेव "दैव्यं" देवसम्बन्धीनि "जनिमानि" जन्मानि देवानित्यर्थः । जानासीति शेषः । तानभि लक्ष्य "अमृतत्वाय" तेषाम् अमरणाय "अङ्ग" क्षिप्रं ‡ "घोषयन्" ऋत्विजो ग्रावाणोव शब्द मुदपादयन् उत्पादयन्ति ¶ [हि योगादनिघातः § ॥

"घोषयन्"-"घोषः"—इति पाठौ ‖ ॥ ६ ॥ ११७

---

* ऋ० ७,५,१७,५=ऋ० ९,१,११–१८,१,१ ।

† "वासिष्ठः"—इति ऋषि-नै० ।

‡ "अङ्गेति क्षिप्रनामाञ्चितमेवाञ्चितं भवति"—इति यास्कः (निरु०नै०५,१७) ।

¶ 'घोषयन् शब्दयन्'—इति वि० ।

§ "हिचयुतु परच्छन्दसि"—इति पा० ८,१,५६ ।

‖ 'विनियोगोऽस्य ततीयेऽहनि'-इति वि० ।

४र ५ १ र २
(सन्तनि)॥ एषाहाउ। स्याधारयाइ१उवार३।

५ १ ५र १रर१ र १ २ ४र
सू२३४ताः। अव्यार२वारेभिःपवतेमदिन्तमा२३ः। क्रीडन्

५ १ २ ५
हाउ। ऊर्मिरपाइ१उवार३। ई२३४वा॥—*

१ १र र १
(सोमसामानि चैव त्रीणि॥) एषस्यधा। राया१

२ र१र १ २र २ २ १
सूतार२ः। अव्यावाराइ। भाइःपवते। मदिन्तमाः।

२र१ १ १ ४ २ ५
क्रीडन्नू२३र्मी३ः। आर३पा३म्। आ३४५इवोईहाइ॥३३॥

२११ ४र ५र १ १रर
एषस्याइधारयासुताः। अव्याहो२इ। वारेभिःपव

र ७ १र २ १र
तेमादिन्तामा२ः। क्रीडा२न्होा१इ। ऊ२३र्मीः। अपा

२१ २ ४५ ४
मिवा। औ३होवा। होा५इ। डा॥३४॥

---

* एतस्यैव साम्नः परार्द्धं यउच्चियेत्यष्टमर्चो गानम् । अनयोः सप्तमाष्टमयोः ऋचोः प्रगाथो भवति । मीमांसादर्शनाधिकरणमालायां नवमाध्याय-द्वितीयपाद-षष्ठाधिकरणादौ तत्रत्यणादयोऽपि विचारिताः । अस्ति चात्रैव भाष्यकृतो भूमिकायां तदुल्लेखः समन्तात् (२५पृ०—२८पृ०) तेनानयोः त्र्यृचकं सम्पद्यते, एवं तादृश् वि-मिश्र-तृचक-साम-दर्शनस्यायमेव हेतुः । तादृश-त्र्यृच_तृचक-सामानि चात्र ऊहे (४, १, ११—१८, २, १) स्फुटानि ।

४र　र ४　१ १र २र १　१ २ १ १
एषस्यधापूरयासुताः । अव्यावाराइ । भिःपवता२

२ ३　२　१र र　१　१　५　४
३इ । मदिन्तमाः । क्रीडन्नूर्मिरपोवा३ओ२३४वा । आ·

५
पूइवोई्वाइ ॥ ३५ ॥ ११८

॥ इति ग्रामे गेये सप्तदशः प्रपाठकः ॥

॥ इति गेयगानं सम्पूर्णम् ॥

उरुऋषिः* । "स्यः" सः "एषः" "सुतः" अभिषुतः सोमः "अव्या वारेभिः" अवेर्वालैः तेभ्यः पवित्रे "धारया" आत्मीयया "पवते" कलश मभिलक्ष्य क्षरति । कीदृशः ? "मदिन्तमः" मादयितृतमः । "अपामिव" उदकानाम् "ऊर्मिः" सङ्घात इव "क्रीडन्" इतस्ततः सङ्क्रीडमानः पवते † ॥

"अव्यावारेभिः"—"अव्योवारेभिः"—इति साम्न ऋचः पाठभेदः ॥ ७ ॥ ११८

* "आङ्गिरसः"—इति ऋषि-मे० ।

† 'विनियोगोऽस्य उत्तमेऽस्मि'—इति वि० ।

अथाष्टमी।

२१ २३ २३ २ २ २ १ ३१२ ३ १ ३१२ १ २
यउस्त्रिया अपिया अन्तरश्मनिनिर्गा अक्कन्तदोजसा।

१ २ ३१ ३२३ २ ३१ २ २ १२ १ ३१
अभिव्रजन्तत्निषे गव्यमश्व्यं वर्मीवधृष्णवारुज (ओ३म् वर्मीं

२ ३१ २
वधृष्णवारुज* ) ॥ ८॥ ११९ †

॥ चतुर्थ-दशति ॥

॥ इति षष्ठः प्रपाठकः समाप्तः ॥ ‡

॥ समाप्तञ्च छन्दआर्चिकम् ॥ ¶

१ ३र १ र २ ४ ५ १
यउस्त्रियार अपिया अन्तरश्मनी२३। निर्गाहाउ। आ

२ ५ २१ २ र १
क्कन्तदा३१उवा२३। जा२३४सा। अभिव्रजन्तत्निषे गव्यम

२ ४ ५ १ २
श्वियार३म्। वर्मीं हाउ। वाधृष्णवा३१उवा२३। रु२

५
३४जा ॥ २२ §॥ ११९

---

* क० ख० पुस्तकयो रेव मभ्यासपाठो न दृश्यते। वस्तुतः खण्डादि-समाप्तावपि चान्त्याभ्यासो वैदिकशैली।

† ऋ०७,५,१८,१=ऋचे ४,१,२—१८,२,१।

‡, ¶ भाष्यकृतः सायणस्य मत-विरुद्धएते परं स्तः सर्वमूलपुस्तकेषु।

§ इदं हि, पूर्व-प्रदर्शित 'सक्मनि'-नामकस्य 'इषाहाउ'—इत्येतस्य (१३८ पृ०) साम्नोऽन्तिमं दलम्। ततश्च न तु गेयगानादन्यदिति ध्येयम्। अतएव हार्चिं प्रदर्शान्वितमिति भ्रमम्।

ऋजिश्वाऋषिः *। "यः" सोमः "उस्रियाः" उत्सरणशीलाः† "अपियाः" अप्याः [आपइत्यन्तरिक्षनाम ( नै० १,३,८)। अस्माद् "भवे छन्दसि ( पा० ४,४,११० )"—इति यत् ] अन्तरिक्षस्थाः। अहि-प्रभृतिभिरसुरैः ‡ अपाहृत्य निहिता "गाः" आपः ¶ "अश्मनि" मेघे § "अन्तः" मध्ये स्थिताइत्यर्थः। "ओजसा" बलेन "निरकृन्तत्" निरच्छिनत् निरगमयत् अन्तरिक्षाद्वृष्टिमकार्षीदित्यर्थः। स त्वम् असुरैरपहृतं "गव्यम्" गो-सम्बन्धि "अश्व्याम्" अश्वेषु भवं "व्रजं" समूहं "अभि तत्निषे" अभितो व्याप्नोति [ तनु विस्तारे—छान्दसे लिटि ‖ "तनिपत्योश्छन्दसि (पा० ६,४,९९)"—इत्युपधालोपः ]। किञ्च। हे "धृष्णो" शत्रुधर्षणशील+ सोम! स त्वं "वर्मीव" कवचीव÷ "आरुज" असुरान् जहि॥

---

* "भारद्वाजः"—इति ऋषि-नै०।

† 'उस्रियाः आदित्य-रश्मयः अनडुाहो वा'—इति वि०। "उस्रियाः"—इति गोनामसु तृतीयं नैघण्टुकम् ( २, ११ )। "उस्राः"—इति तु रश्मिनामसु नवमं नैघण्टुकम् ( १, ५ )। "उस्रियेति गोनामोत्स्राविणोऽस्यां भोगा उस्रेति च"—इति यास्कः ( निरु० नै० ४, १९ )।

‡ अहिरिति असुरइति चेमौ द्वावेव मेघपर्य्यायौ नै०१,१०,२७-२९।

¶ इह मानं मृग्यम्।

§ "अश्मा"—इति मेघनामसु आद्यमं नैघण्टुकम् १,१०।

‖ "छन्दसि लिट्"—इति पा० ३,२,१०५।

+ 'धृष्णो धारयन्'—इति वि०।

÷ 'वर्मी सविता'—इति वि०।

"अपिया अन्तरश्मनि"-"अप्या अन्तरश्मनः"—इति छन्दोग-बह्वृचानां पाठभेदः॥ ८॥ ११९

इति श्रीमत्सायणाचार्य्य-विरचिते सामवेदार्थ-प्रकाशे छन्दो-व्याख्याने पञ्चमस्याध्यायस्यैकादशः खण्डः॥११॥

॥ इति काकुभं समाप्तम्॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ ५॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमोऽध्यायः समाप्तः॥ ५॥

॥ सौम्यं पावमानं वा पर्व काण्डं वा समाप्तम्॥

॥ इति तृतीयं पर्व॥

ॐ नमः सामवेदाय।

# अथ षष्ठोऽध्याय आरभ्यते॥



यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम्॥ १॥

आरण्यकाभिधः* षष्ठोऽध्यायो व्याक्रियतेऽधुना†॥ २॥
तवेन्द्रेत्यादिकानान्तु पञ्चपञ्चाशतां क्रमात्।
ऋषिं छन्दो दैवतञ्च तत्र तत्राभिदध्महे॥ ३॥

तत्राद्याया ऋचो द्रष्टा भरद्वाजः प्रकीर्त्तितः।
द्वितीयस्या वसिष्ठः स्यात्तृतीयाया ऋचः स्मृतः॥ ४॥
वामदेव स्ततश्छन्दो बृहती त्रिष्टुबेव च।
गायत्रीति क्रमादिन्द्रो भवेत्तिसृषु देवता॥ ५॥

---

* "अरण्यान्मनुष्ये" (४, २, १२९ पा०)। अत्यल्पमिदमुच्यते मनुष्यइति (प०)। पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् (का०)। आरण्यकः पन्थाः। आरण्यकोऽध्यायः। आरण्यको न्यायः। आरण्यको विहारः। आरण्यको मनुष्यः। आरण्यको हस्ती (प०)। वा गोमयेषु (का०)। वा गोमयेष्विति वक्तव्यम्। आरण्यका गोमयाः आरण्या गोमयाः (प०)।

† अथ आर्चिक-ग्रन्था इति विवरणादि-सकल-ग्रन्थ-सम्मता वैदिक-प्रवादानुगताः पुस्तकान्तर-समीक्षणेनोपलभ्यन्ते च। तथापि षडध्यायात्मकश्छन्दो नाम एकः, अपरो

तत्र प्रथम-खण्डे—

सैषा प्रथमा।

१ २ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २

इन्द्रज्येष्ठन्न आभर ओजिष्ठम्पुपुरिश्रवः

१२ २२ २ १ २ ३ १२ १२२

यद्दिधृक्षेमवज्रहस्तरोदसीउभेसुशिप्रपप्राः ॥ १ ॥ १ *

२र १र र र र १ १र

† हाउ। ३। औहोइन्द्रज्येष्ठन्नआभरा३ए। हाउ।

१र १ २ र१२ २र र र १ २

३। औहोँ२। ओँ२। जिष्ठम्पूपारा। औहोवाश्रावाः।

२र १र १ २ र १ २ २

हाउ। ३। औहो२। या२त्। दिधृक्षेमाव। ज्र

१र र र र र १ २ २र १र

हस्त। औहोवारोदासी। हाउ। ३। औहो२।

१ १र १ २ १र र र १ २ १र

ओ२। भेसुशाइप्रा। औहोवापाप्राः। हाउ। ३।

१र ११ २ २ २ १

औहो२। ओ२। उऊवा३हाउ। वा३। हस्॥२४॥१ ‡

---

नवाध्यायात्मक उत्तरः, ताभ्यामन्यत् एषोऽध्यायैकात्मकः आरण्यक इति व्यवहृतः। सायण-मते तु नैवम्। अयं हि मन्त्रोपविभागे रेव छन्दोग्रन्थं परिसमाप्य तस्यैव षष्ठोपभाग एष इति मन्यते।

* ऋ० ४,७,१७,५। † “भारद्वाजम्”—इति आ० ग्रा० २, २, ९।

‡ आ० पा० १प० १, १, २४।

हे "इन्द्र"!* "ज्येष्ठ" प्रशस्यतमम् "ओजिष्ठम्" अतिशयेन बलकरम् "पुपुरि" पूरकं "अवः" अन्नं "नः" अस्मभ्यम् "आभर" आहर प्रयच्छ। हे "वज्रहस्त" वज्रबाहो!† हे "सुशिप्र" शोभन-हनुक! एवम्भूत! हे "इन्द्र"‡ "यत्" "अन्नं" "दिधृषेम" धारयितु मिच्छेम यथान्नं इमे परिदृश्यमाने "उभे" "रोदसी" द्यावापृथिव्यौ "आ पप्राः" आपूरयसि। तदन्न माहरेत्यन्वयः।

"येनेमेचित्रवज्रहस्त"—इति बह्वृचानां पाठः॥ १ ॥ १

---

* "इन्दतेर्वैश्वर्य्य-कर्म्मणः"—इति नैरुक्तम् (२का० १०ख० ८ख०) ईश्वरत्वार्थमिति तद्भाष्यम्।

† "अथाकारचिन्तनं देवतानां। पुरुषविधाः स्युरित्येकं चेतनावद्वद्धि स्तुतयो भवन्ति तथाभिधानानि। अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते—'ऋष्वा त इन्द्र स्थविरस्य बाहू यत् संगृभ्णा मघवन् काशिरित्ते'। अथापि पौरुषविधिकैर्द्रव्यसंयोगैः—'आ द्वाभ्यां हरिभ्या मिन्द्र याहि कल्याणीर्जाया सुरणं गृहे ते'। अथापि पौरुषविधिकैः कर्मभिः-'अद्धीन्द्र पिब च प्रस्थितस्य आश्रुत्कर्ण श्रुधी हवम्'॥६॥ अपुरुषविधाः स्युरित्यपरमपि तु यद्दृश्यतेऽपुरुषविधन्तद्यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति। यथो एतच्चेतनावद्वद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि यथो एतत् पौरुषविधिकैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद्भवत्यभि क्रन्दन्ति हरितेभिरासभि रिति ग्रावस्तुतिर्य्यथो एतत् पौरुषविधिकैर्द्रव्यसंयोगैरित्येतदपि तादृशमेव सुखं रथं युयुजे सिन्धु रश्विन मिति नदी-स्तुतिर्यथो एतत् पौरुषविधिकैः कर्मभिरित्येतदपि तादृशमेव होतुश्चित् पूर्वे हविरद्यमाशतेति ग्रावस्तुतिरेवापि वोभयविधाः स्युरपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युर्यथा यज्ञो यजमानस्यैषचाख्यानसमयः॥७॥"—इति निरु० दै०।

‡ "शिप्रे हनू नासिके वा"—इति निरु० नै० ६,१७।

अथ द्वितीया।

२ ३ २ ३ १ २ ३ १र २र ३र ३ १ २ ३ १ १
इन्द्रोराजाजगतश्चर्षणीनामधिक्षमाविश्वरूपंयदस्य।
१ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ २
ततोददातिदाशुषेवसूनिचोदद्राधउपस्तुतञ्चिदर्वाक्॥२॥२

१ २ २र १ ३ १ २ १ २
* हावीन्द्राः। राजा। जगतः। चर्षणीनाम्। नाम्।
२र १र २र १र २र १र
२। नाश्रोइनम्। ३। नाहोइनम्। ३। हावीहो
२ २ १ १ १ र २ २
हाउ। अधिक्षमा। विश्वरू। पंयदस्या। स्या। २।
२र १र २र १र १र २र १र
स्याश्रोइनम्। ३। स्याहोइनम्। ३। औहोहावीहो २।
२ १र २ १र २ र २
ततोददा। तीरदाशु। षाइवसूनी। नी। २।
२र १र २र १र २र १र २
नाश्रोइनम्। ३। नाहोइनम्। ३। हावीहोहाउ।
२र १ र २ १ २ २ २र
चोदद्राधाः। उपस्तु। तञ्चिदर्वा। र्वा। २। र्वा
१र २र १र १र २र १र
श्रोइनम्। ३। र्वाहोइनम्। ३। औहोहावीहो
२ ३ १ ११ १
३। हाउवा३। ई२३४५ः॥ ८ † ॥

* "इन्द्रस्यार्कौ द्वौ"—इति ब्रा० ब्रा० ३,२,१०।

† वा० मा० १प० १,१,८।

१　२　　१२१　२१　२　२　　१
इन्द्राहाउ। राजा। जगतः। चर्षणीनाम्। नाम्।
　१२ २　　　१२ २ २२　　　२२　　२
२। नोवा। ३। नोवाहाइ। ३। हाओ३। हा
१　　२ १　　२ १ २　　२　　१
३हाउ। अधिक्षमा। विश्वरू। पंयदस्या। स्या।
　१२ २　　१२ २ २२　　२२　　२　१
२। स्योवा। ३। स्योवाहाइ। ३ हाओ३। हा३हा
　२१२　　२　१२　　१　२　　१
उ। ततोददा। ती३दाशु। षाइवद्धजी। नी। २।
१२ २　　　१२ २ २२　　२२　　२　१
नोवा। ३। नोवाहाइ। ३। हाओ३। हा३हाउ।
१२ १ २　　२ १　　२　　२　　१२
चोदद्राधाः। उपस्तु। तश्चिदर्वां। वां। २। वों
२　　१२ २ २२　　२२　　२ १
वा। ३। वोंवाहाइ। ३। हाओ३। हा३हाउ।
१　　३ १ ११ १
वा३। ई२३४५। ॥ १० * ॥ २

यः "इन्द्रः" "जगतः" जङ्गमस्य पश्वादेः यतो "राजा" ईश्वरो भवति। चर्षणीनां मनुष्याणां च † राजा भवति। किञ्च "अधि" क्षमा [ सप्तम्येकवचनस्य लुक् ‡ ] क्षमायां ¶ "विश्व-

* षा० मा०१,१,१०।

† "चर्षणयः"—इति मनुष्य-नामस्वष्टमं नैघण्टुकम् २, ३।

‡ "सुपांसुलुक् ( पा० ७, १, ३९ )"—इत्यादिना।

¶ "क्षमा"—इति पृथिवी-नामसु षष्ठं नैघण्टुकम् १, १।

अथ तृतीया।

१ ३ १ ३ १ ३ १ २ ३ २उ ३ २३क २र
यस्येदमारजोयुजस्तुजेजनेवनᳬस्वः।
१ २ ३ १ २ ३ २
इन्द्रस्यरन्त्यम्बृहत्॥ ३॥ ३

१ २ २ १ र १ २ १र र
* हाउयास्या। इदमारजोयू१जा२ः। तुजेजनेव
२ १ २ २
नाᳬसू१वा२ः। आइन्द्रस्या ३ ४ ५ रा ६ ५ ६। तियं
१
बृहत् ॥ ११ † ॥

रूपं" "यत्" धन मस्ति "अस्य" तस्यापि राजा भवति। "ततो ददाति दाशुषे वसूनि" यजमानाय ‡ वसूनि धनानि ददाति। स इन्द्रः अस्माभिः "उपस्तुतं" सम्यक् स्तुतं "राधः" धनम् "अर्वाग्" अस्मदभिमुखं "चोदत्" प्रेरयतु।

"अधिचमा"—"अधिचमि"--इति, "विश्वरूपम्"--"विषुरूपम्"-इति, "उपस्तुतम्"—"उपस्तुतः"—इति च साम्न ऋचः पाठभेदः॥ २॥ २

---

* "अर्कशिरः"—इति भा० ग्रा० ३,१,१०।

† भा० गा० १प० १, २, ११।

‡ दाशुषे—इति दानकर्मणो दाशतेः (नै० ३, २०, १) रूपम् "दाश्वान् साह्वान् मीढ्वांश्च (८) १,१२"—इति सिद्धम्।

अथ चतुर्थी।

१ २ ३ १ २ ३ १ २ ३ १र २र ३ १र ३र ३ १ १
उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय।

१ २ ३ १ २ ३ १र ३र ३ १ २ १ २
अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥ ४ ॥ ४ *

१र १र र ३र १ २ १
† हाउ। ३। आयुस्तनुर्ज्योतिः। औहोवा। ई

२ १ र १ १ २ १र
या। उदुत्तमं वरुणपाशमा२३स्मात्। अवाधमं विमध्यमं

३१ २ १ र र ३१ २ २ र १र
श्रथा२३या। अथादित्य व्रते वयन्ता२३वा। अनागसोश्र

"रजोयुजः" ज्योतिर्भिर्युक्तस्य (ज्योती रज उच्यत इति यास्कः ‡) अत्यन्त तेजस्विनः "यस्य" इन्द्रस्य "इदं" पुरोवर्ति सोमयुक्तं हविरस्ति तद्धविः "स्वः" स्वर्गे सर्वत्र वा "तुजे" दातरि ¶ "जने" यजमानविषये "वनं" यतो वननीयं सम्भजनीयं खलु। अतः "इन्द्रस्य" दानं "रण्यम्" अत्यन्त-रमणीयं "बृहत्" प्रभूतं भवति॥ २ ॥ २

---

* ऋ० १, २, १५, ५। † "वदबमोतमयोरर्कः"—इति आ० ब्रा० ३,२,१०।

‡ "रजो रजतेः। ज्योती रज उच्यते। उदकं रज उच्यते। लोका रजांस्यु च्यन्ते। असृगहनी रजसी उच्येते। "रजांसि चित्रा विचरन्ति तन्यवः"—इत्यपि निगमो भवति"—इति निरु० नै० ४, १९।

¶ तुजे इति तुञ्जतेर्दानकर्मणो रूपम् नै० ९, २०, ९।

र १ १ २ २र २र र
दितयेसियाऽ२३माऽ३। हाउ। ३। आयुश्चक्षुर्ज्योतिः।
२र १ २ १ २ ५र र २ १ १ १
औहोवा। ईऽ२। याऽ२३४। औहोवा। ईऽ२३४५

॥ १३* ॥ ४

आद्ये ऋचो चतुष्पादे ह्येकपाद्युतास्तिमा।

शौनःशेपी गार्त्समदी वामदेवीति ताः क्रमात्।

आत्रेयी पावमानी च वैश्वदेवीति संस्मृताः॥

हे "वरुण !" † "उत्तमम्" उत्कृष्टं शिरसि बद्धं "पाशम्" "अस्मत्" अस्मभ्यम् "उच्छ्रथाय" उत्कृष्टं शिथिलं कुरु। "अधमं" निकृष्टं पादेऽवस्थितं पाशम् "अव श्रथाय" अवाधस्तात् शिथिलीकुरु। "मध्यमं" नाभिदेशगतं पाशं "विश्रथाय" वियुज्य शिथिलीकुरु। "अथ" अनन्तरं हे "आदित्य" अदितेः ‡ पुत्र !

* आ० आ० १प्र०१, २, १२।

† "इन्द्रस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवासथि। अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ( ऋक् १०म० ६, ४, ४ )"—इति मन्त्रलिङ्गात्—"अहोरात्रे मित्रावरुणौ ( ३का० ११प्र० २२अ० )"—तैत्तिरीयब्राह्मणाच्च मित्रशब्देन दिवा, वरुण-शब्देन च रात्रिः ग्रहणः। "वरुणः वृणोतीति सतः ( २का० १०प०२अ० )"—इति व्युत्पादनात् सर्वेषां वृकपकादीनां तमोरूपेण आवरकत्व।

‡ "अदितिरदीना * * 'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्'—इत्यदितेर्विभूतिमाचष्ट एनान्यदीनानीति वा"—इति नैरुक्तम् २का० ४प० २२-२३ख०। दितिः खण्डनं तदभावोऽदितिरिति निष्पन्नोऽर्थो भाष्यादि-सम्मतः।

अथ पञ्चमी ।

१ २ ३ १२ ३१ २
त्वयावयम्पवमानेनसोम

१ २ ३ १२ ३१ ३ १ २
भरेकृतंविचिनुयामशश्वत् ।

१ २ ३ १२ ३१ २
तन्नोमित्रोवरुणोमामहन्ता

१ २ ३ १ २ ३२ ३१
मदितिःसिन्धुःपृथिवीउतद्यौः ॥ ५ ॥ ५ *

२ २ १ १ ३२ २ ५ २
† हुपायपुह । पा । ओहा । ईश्या । ( एवं त्रिः )

२२ २ ३१ २ २२ २ १ २
त्वयावयम्पवमानेनसोमा । भरेकृतंविचिनुयामशाश्वात् ।

३२ २ २२२ २ २ २
तन्नोमित्रोवरुणोमामहान्ताम् । अदितिःसिन्धुःपृथिवी

वरुण ! "वयं" शुनःशेपाः "तव" व्रते त्वदीये कर्मणि "अदितये" खण्डन-राहित्याय "अनागसः" अपराध-रहिताः "स्याम" भवेम ॥

"अथादित्यव्रतेवयन्तव"-"अथावयमादित्यव्रतेतव"—इति साम्न ऋचः पाठभेदः ॥ ४ ॥ ४

---

* ऋ० ७, ४, २२, १ ।  † "अपां सर्पसाम"—इति आ० ब्रा० ३, २, १२ ।

२ २ १२१ १२ २ ३ २
उताद्यौः। हुपायप्रुह्व। पा। ओह्वा। इ३या।

१२१ १२ १ १ १
२। हुपायप्रुह्व। पा। ओह्वा। ई२। या२३४।

५२ २ १२ १ १२ १ १ १ १ १
औहोवा। ए। सुवः। २। ए। सुवा२३४५ः।

॥ ७* ॥

२२१ १ १२ २ २२ २२
हुपायप्रुह्व। पा। ओह्वा। (एवं त्रिः)। त्वयावयम्पवमाने

१ २ १२ २ १ २ १२ २
नसोमा। भरेक्षतंविचिनुयामशाश्वत्। तन्नोमित्रोवरु

२ २ १ १ २ १ १
णोमामहान्ताम्। अदितिःसिन्धुःपृथिवीउता। द्यौः।

२२१ १२ २ २२१ १२
हुपायप्रुह्व। पा। ओह्वा। २। हुपायप्रुह्व। पा।

१ १ ५२ २ १ १२ १
ओ२। हा२३४। औहोवा। सुवः। ए१। सुवः।

२१११
ए२३४५॥ ८‡॥ ५

*,‡ आ० गा० १५० ९, १, ७-८। † "समुद्रस्य सर्पसाम"—इति आ० गा० ९,२,११।

अथ षष्ठी।

२ १र २र २३७ ३ १
इमंवृषणङ्कृणुतैकमिन्माम्॥ ६॥ ६

३ २र ३र र २ १ १ ३ २
* इमाओवा। ३। इमा३। ओइ। २। इमा

१ ५ १२र २र र १ १ १
३। ओ२३४वा। वृषाओवा। ३। वृषा३। ओइ।

हे "सोम!"† पवमानेन पवित्रेण पूयमानेन "त्वया" सहायेन "भरे" [ सङ्ग्राम-नाम ( नै०२,१७,६) ] सङ्ग्रामे "प्रस्वद्" बहु "कृतं" कर्तव्यं "वयं" "विचिनुयाम" विशेषेण कुर्याम। यस्मात्तव साहाय्येन कर्माणि कुर्मः "तत्" तस्मात्, अस्मान् "मित्रः वरुणः अदितिः" एतन्नामिकाः। "सिन्धुः"‡ एतदभिधाना। तथा "पृथिवी" "उत" अपिच "द्यौः"। एते मित्रादयः "नः" अस्मान् "मा" "महन्तां" पूजयन्तु धनादिदानेन॥ ५॥ ५

---

* "वृषा"—इति षा० ग्रा० ३,२,१२।

† "सोमः सूनोतेः यदेन मभिषुण्वन्ति। बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यं मिव प्राधान्येन। तस्य पावमानीषु निदर्शनायोदाहरिष्यामः"—इत्यादि नैरुक्तम् एका० ११ख० २ख०।

‡ सिन्धुः समुद्रः। समुद्र इति अन्तरिक्षनामसु पञ्चदशम् पदम् नि० १, ३।

अथ सप्तमी ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
सनद्रिन्द्राययज्यवेवरुणायमरुद्भ्यः ।
१ २र ३र
वरिवोविन्परिस्रव ॥ ७ ॥ ७ *

३ २ १ ५ २ ३र ३र ३र ३र ३र
२ । वृषा३ । ओ२३४वा । पञ्कृणावता । एकाओ
र ३र २ १ ३र २ १ ५
वा । एका३ । ओइ । २ । एका३ । ओ२३४वा ।
२ २ १ १ १
इन्मा२३४५म् ॥ १३ † ॥ ६

१ ३ १ ३र १र र र
‡ एजधा । तेजातमन्धसोदिविसद्भूमिया२द
१ १ १ २ २ २ १ २
दाइ । इडा । उग्रꣳशर्ममहा१इश्रा३वाः । सानः ।

पूर्वस्या ऋचि प्रकृता हे मित्रादयो देवाः ! यूयम् "एकम्" अद्वितीयं दानकर्मणि "इमं" सोमं "वृषणं" कामाना मभिवर्षकं "अकृत" कुरुत । तथा "इमां" क्रियां फलाभिवर्षिकां कुरुत ॥

६ ॥ ६

---

* ऋ० ७, १, १९, १ ।

† आ० ग्रा० १प० २,१, १३ ।

‡ "शाकरवर्णम्"—इति आ० ग्रा० १,२,१३ ।

१र  र  र  १  १  १ र

इन्द्राययज्यवेवरुणायमरु२द्भियाः । इडा । वरिवोवि

२  २  २  १  २  १र  र  र  र

त्परा१इस्रा३वा । आइना । विश्वान्ययआद्युम्नानिमानुषा

१  र  र  १  १ २

२णाम् । इडा । सिषासन्तोवना२३होइ । माहा३१उ

१  १ १११ १

वा२३ । इट् । इडा२३४५ ॥ १८ * ॥ ७

गायत्री पावमान्यौ तु सन इत्यादिके ऋचौ ।

असहीयुस्तयोरेवं छन्दोदैवतनिर्णयः ॥

हे सोमः ! † "सः" "नः" "वरिवोवित्" धनस्य लम्भकस्त्वं "नः" अस्माकं "यज्यवे" यष्टव्यायेन्द्राय "वरुणाय" ‡ "मरुद्भ्यः" ¶ च "परिस्रव" धारया चर ॥ ७ ॥ ७

---

* आ० गा०१प्र० २, १, १९ ।

† "यद्वैषा परा भवति चन्द्रमसो वैतस्य वा"—इति नि० ३का० ११ख० ४पं० ।

‡ 'वरुणः कवन्धं प्र-ससर्ज( ऋ०५,६,१३,१ )'—इत्यादि-मन्त्र-लिङ्गात् इह वरुणो मेघ-वर्षण-हेतुभूतः । "कवन्धोमेघम्"—इत्यादि निघ०है०१०,४ ।

¶ "मरुतो मितराविणो वा, मितरोचिणो वा, महद्द्रवन्तीति वा इति नैरुक्तम् ११का० ११ख० १३० । 'वायु वै क्षेपिष्ठा देवता'—इति च श्रूयते । ततो मरुतो वायव इति सिद्धान्तः ।

अथाष्टमी।

३१२ २२ १२३ १ २ ३१ २
एनाविश्वान्यर्य आद्युम्नानिमानुषाणाम्।

१ २
सिषासन्तोवनामहे ॥ ८ ॥ ८

२२ १२ २२१ २ २२
* हाउ। ३। उद्वातिजातमा२३न्धसा३ः। हाउ। ३।
२ २१ २ २२ २ १
दिविसद्भूमिया२३ददा३इ। हाउ। ३। उग्रᳬशर्म महा२३इ
२ १ ३ ५ २२ १ २१
अवाउ। वा३। ई२३४डा। हाउ। ३। सनइन्द्रायया
१ २२ १ २१ १ २२
२३ज्यवा३इ। हाउ। ३। वरुणायमरु२३त्नियाः। हाउ।
२ २ १ २ १ ३ ५ २२
३। वरिवोवित्परा२३इस्रवाउ। वा३। इ२३४डा। हाउ।
२२ २ १ १ २२ १ २ २
३। एनाविश्वानिआ२३र्य आ३। हाउ। ३। द्युम्नानिमा
१ २ २२ १ २ २१ २
नुषा२३णा३म्। हाउ। ३। सिषासन्तोवना२३महाउ।
१ १ ११११
वा३। इट्। इडा२३४५॥ १२ † ॥ ८

* "अपत्यम"—इति आ० गा० १,२,१२।

† आ० गा० २प० ३, १, १२।

अथ नवमी ।

३ १ २     ३ २ ३ २ ३
अहमस्मिप्रथमजाऋतस्य
१ २ ३ १ २ ३ १ २ ३ १ २
पूर्वन्देवेभ्योअमृतस्यनाम ।
२ ३ १ २ ३ २उ ३ १ २
योमाददातिसइदेवमाव
३ २उ ३ १ २ ३ १ २
दहमन्नमन्नमदन्तमद्मि ॥ ९ ॥ ९

॥ प्रथम-दशति ॥

२र     १र र २     २ १     १र २र
* हाउ। ३। सेतूᳫस्तर। ३। दुस्त। रान्। ३। दाने
१र र २     २र     २     र १
नादानम्। ३। हाउ। ३। अहमस्मिप्रथमजाऋतार३
२ १ १ १ १     २र     १र र २     २ १
स्यार२३४५। हाउ। ३। सेतूᳫस्तर। ३। दुस्त। रान्। ३।

"एना" एनेनान्नेन सोमेन "मानुषाणां" मनुष्याणां "विश्वानि" "द्युम्नानि" अन्नानि "अर्यः" अभि गच्छन्तः † "सिषासन्तः" सम्भक्तु मिच्छन्तश्च वयं "वनामहे" भजामहे ॥ ८ ॥ ८

---

* सर्वम्। सेतुषाम। पुरुषगतिर्वा। विश्लोकं वा—इति षा०ब्रा० ३,२,१२।

† "अर्यः"—इति ईश्वर नामसु द्वितीयं नैघण्टुकम् २,२२। इह तु ऋ गतावित्यस्य रूपमिदम्।

२ २र १र२ १ २ २र १र २र
अक्रोधेनक्रोधम्। २। अक्रोधेनक्रोधम्। हाउ। ३।

२र २ २ १ २ १ १ १ १ १ २
पूर्वन्देवेभ्योअमृतस्यना २ ३ मा २ ३ ४ ५। हाउ। ३।

१रर २ २१ २ १ र २र
सेतूंस्तर। ३। दुस्त। रान्। ३। अश्रयाश्रद्धाम्। ३।

२र र र र१ २ १ १ १ १ २र
येमाददातिसइदेवमा २ ३ वा २ ३ ४ ५ त्। हाउ। ३।

१रर २ २१ २१रर २
सेतूंस्तर। ३। दुस्त। रान्। २। सत्येनानृतम्। ३।

२र २ १ २ १ १ १ १ २५
हाउ। ३। अहमन्नमन्नमदन्तमा२३मी२३४५। हाउ।

२र१र २र१ १ १ १ २
३। वा। एषागतिः। ३। एतदमृतम्। ३। स्वर्गच्छ। ३।

१र २ १रर २र१र २१ १ १ १ १
ज्योतिर्गच्छ। ३। सेतूंस्तीर्त्वाचतुरा२३४५ः॥ ३४ *॥ ६

त्रिष्टुभा अन्नदेवता आत्मान मेवाह आत्मा एव ऋषिः। "देवेभ्यः पूर्व" अग्नि-वरुणादि-देवेभ्यः पुरा "अहम्" "अन्नम्" देवता "अमृतस्य" विनाश-रहितस्य "ऋतस्य" सत्यस्य पर-ब्रह्मणः सम्बन्धिनी "प्रथमजा अस्मि नाम" प्रथमत एवोत्पन्ना

* आ० १प० २, १, १४।

भवामि खलु। "यः" पुमान् "मां ददाति" अन्नरूपां माम् अतिथ्यादिभ्यो ददाति "स इत्" स एव "एवं" परिदृश्यमान-प्रकारेण "आवत्" भवति सर्वान् प्राणिनो रक्षति। यस्तु लोभ-युक्तः सन् प्राणिभ्योऽन्नमदत्वा स्वय मेव तदन्न मत्ति "अन्नम् अदन्तं" नाना-विधान्न-भक्षकं तं लोभिनम् अहमन्नम् अन्न-देवता "अद्मि" भक्षयामि विनाशयामीत्यर्थः॥ ९ ॥ ९ *

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने षष्ठाध्यायस्य प्रथमः खण्डः॥ १ ॥

---

* अथाह यास्कः—व्याख्यातं दैवतं यज्ञाङ्गञ्चाथात ऊर्ध्वमार्गगतिं व्याख्यास्यामः॥ सूर्य आत्मेत्युदितस्य हि कर्मद्रष्टा यैतदनुप्रवदन्त्यथैतं महान्तमात्मानमेषर्गणः प्रवदतीन्द्रं मित्रं वरुणमग्निमाहुरित्यथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाचाग्निरस्मि जन्मना जातवेदा ऽहमस्मि प्रथमजा इत्येताभ्याम्॥ १ ॥ अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतम् म आसन्। अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम॥ अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम। यो मा ददाति स इदेवमावा अहमन्नमन्नमदन्तमद्मि इति स ह ज्ञात्वा प्रादुर्बभूवैतमाजहाराय तमात्मानमध्यात्ममभिकमन्य त्वाचाचक्षेति॥ २ ॥ अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम्। स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः। आवरीवर्ति भुवनेष्वन्तरित्यथैष महानात्मा सत्त्वलक्षणस्तत्परन्तद्ब्रह्म तत्सत्यन्तत्सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तदमृतं तच्छुक्रं तन्निष्ठो भूतात्मा। सैषा भूतप्रकृतिरित्येके तत्तु क्षेत्रं तद् ज्ञानात् क्षेत्रज्ञमनु प्राप्य निरात्मकमथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी इति। कामद्वेषस्तम इत्यविज्ञातस्य विशुध्यतो विभूतिं कुर्वतः क्षेत्रज्ञ-पृथक्त्वाय कल्पते प्रतिभाति छिन्नो महानात्मा तमोऽभिभूतो विद्या प्रकाशच्छिन्नतमोऽपि भिन्न-

यश्चिञ्च आकाशः ॥ ३ ॥ आकाशगुणः शब्द आकाशाद्वायुर्द्विगुणः स्पर्शेन वायो र्ज्योतिस्त्रिगुणं रूपेण ज्योतिष आपश्चतुर्गुणा रसेनाद्भ्यः पृथिवी पञ्चगुणा गन्धेन पृथिव्या भूतग्रामस्थावरजङ्गमास्तदेतद्युगसहस्रं जागर्त्ति तस्यां ते सुषुप्सुप्रज्ञानि प्रत्याहरति भूतग्रामाः पृथिवीं यन्ति पृथिव्यप आपो ज्योतिषं ज्योतिर्वाय वायुराकाश माकाशो मनो मनो विद्यां विद्या महान्त मात्मानं महानात्मा प्रतिभां प्रतिभा प्रकृतिं सा स्वपिति युगसहस्रं रात्रिस्तावेतावहोरात्रावजस्रं परिवर्त्तेते स कालस्तदेतदहर्भवति। युगसहस्रपर्यन्त महर्यद् ब्रह्मणो विदुः रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाइति ॥ ४ ॥ तं परिवर्त्तमान मन्योऽनुप्रवर्त्तते स्रष्टा द्रष्टा विभक्तातिमात्रोऽह मिति गम्यते स मिथ्याद्यनेदं पावकं महाभूतेषु चिरोऽथाकाशाद्वायोः प्रःश्वसत्सु य ककारस्य तेजसोऽद्भ्यः क्लेदं पृथिव्या मूर्त्तिः। पार्थिवांस्त्वष्टौ गुणान्विद्यात् षोऽस्मात्तस्त्रीन् पितृतो ऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसशोणितानि मातृतोऽन्नं पान मित्यष्टौ सोऽयं पुरुषः सर्वमयः सर्वज्ञानोपि क्लृप्तः ॥ ५ ॥ स यद्यनुरुध्यते तद्भवति। यदि धर्ममनुरुध्यते तद्देवो भवति यदि ज्ञानमनुरुध्यते तदमृतो भवति यदि काम मनुरुध्यते सं च्यवते। इमां योनिं सन्दध्यात्तदिदमत मतम्— स्नेहा रेतसः सम्भवति स्नेहाद्रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नावा स्नावोऽस्थीन्यस्थिभ्यो मज्जा मज्जातो रेतस्तदिदं योनौ रेतः सिक्तं पुरुषः सम्भवति। शुक्रातिरेके पुमान् भवति शोणितातिरेके स्त्री भवति द्वाभ्यां समेन नपुंसको भवति शुक्रभिन्नेन यमौ भवति शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च तत् कथमिदं शरीरं परं संयम्यते सौम्यो भवत्येकरात्रोषितं कललं भवति पञ्चरात्राद्बुद्बुदाः सप्तरात्रात्पेशी द्विसप्तरात्रादर्बुदः पञ्चविंशतिरात्रः स्वस्थितो घनो भवति मासमात्रात् कठिनो भवति द्विमासाभ्यन्तरे शिरः सम्पद्यते मासत्रयेण ग्रीवाव्यादेशो मासचतुष्केण त्वग्व्यादेशः पञ्चमे मासे नखरोमव्यादेशः षष्ठे मुख नासिकाक्षिश्रोत्रं च सम्भवति सप्तमे चलनसमर्थो भवत्यष्टमे बुद्ध्याध्यवस्यति नवमे सर्वाङ्गसम्पूर्णो भवति ॥ मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः। नाना योनि सहस्राणि मयोषितानि यानि वै॥ आहारा विविधा भुक्ताः पीता नानाविधास्तनाः। मातरो विविधा दृष्टाः पितरः सुहृदस्तथा॥ अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः। सांख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकमिति ॥ ततश्च दशमे मासे प्रजायते जातश्च वायुना स्पृष्टस्तत्र स्मरति जन्ममरणम्। अन्ते च

शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥ ६ ॥ अष्टोत्तरं सन्धिशत मष्टाकपालं शिरः सम्प-
द्यते षोडश वपापलानि नव स्नायुशतानि सप्तशतं पुरुषस्य मर्माणि अर्धचतस्रो रोमाणि
कोट्यो हृदयं ह्यष्टकपालानि द्वादशकपालानि जिह्वा वृषणौ ह्यष्टसुपर्णौ तथोपस्थ-
ः पायुश्चेतन् मूत्रपुरीषं कस्मादाहारपानसिक्तत्वादनुपचितकर्माणावन्योन्यं जायेते
इति। तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च महत्यप्रमाणमपि मग्नो जरामरण-
क्षुत्पिपासा: शोक-क्रोध-लोभ-मोह-मद-भय-मत्सर-हर्ष-विषादेर्ष्यासूयात्मकैर्द्वन्द्वैरभि-
भूयमानः सोऽस्मादार्जवं जवीभावामात्मन्निर्मुच्यते सोऽस्मात्प्राप्य महाभूमिकावच्छरीराणि-
मेषमार्वैः प्रकृत्य प्रकृतिरविपरीत्य तैजसं शरीरं कृत्वा कर्मणोऽनुरूपं फल मनु-
भूय तस्य सङ्क्षये पुनरिमं लोकं प्रतिपद्यते ॥ ७ ॥ अथ ये हिंसा माश्रित्य विद्यामु
त्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूम मभि सम्भवन्ति
धूमा द्रात्रिं रात्रेरपक्षीयमाणपक्ष मपक्षीयमाणपक्षाद्दक्षिणायनं दक्षिणायनात्
पितृलोकं पितृलोकाच्चन्द्रमसं चन्द्रमसो वायुं वायोर्वृष्टिं वृष्टेरोषधयश्चैतद्भूत्वा तस्य
सङ्क्षये पुनरेवेमं लोकं प्रतिपद्यते ॥ ८ ॥ अथ ये हिंसामुत्सृज्य विद्या माश्रित्य
महत्तपस्तेपिरे ज्ञानोक्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभि सम्भवन्त्यर्चिषोऽहरह्न आपू-
र्यमाणपक्ष मापूर्यमाणपक्षादुदगयनमुदगयनाद्देवलोकं देवलोकादादित्यमादित्या-
द्वैद्युतं वैद्युतान् मानसं मानसः पुरुषो भूत्वा ब्रह्मलोक मभिसम्भवन्ति न ते पुनरावर्त्तन्ते
शिष्टा दन्दशूका यत इदं न जानन्ति तस्मादिदं वेदितव्य मथाप्याह ॥ ९ ॥ न तं
विदाथ य इमा जजानान्यद्युष्माक मन्तरं बभूव। नीहारेण प्रावृता जल्प्या
चासुतृप उक्थशासश्चरन्ति ॥ न तं विद्यया विदुषो यमेवं विद्वांसो वदन्त्यक्षरं
ब्रह्मणस्पति मन्यद्युष्माक मन्तर मन्यदेषा मन्तरं बभूवेति नीहारेण प्रावृतास्तमसा जल्प्या
चासुतृप उक्थशासः प्राणं सूर्यं यत्पथगामिनश्चरन्त्यविद्वांसः ये यस्य मनु प्र वदन्त्यथा
यो विद्वांसः ये मन्त्रोऽनु कल्पते तस्य तपसा सदाप्रमाद मेत्ययाप्तो भवति सेवा सन्तत
ज्ञिप्केतेन पुष्पौ मिष्टो देव हि सखा भेषः सम्भाषाति भूतं भवद्भविष्यदिति। आत्मा
कस्माज्जायते सदा कस्मात्त्यजते सह भूतेन्द्रियैः शेरते महाभूतानि चेन्द्रियाणि प्रज्ञया
कर्म कारयति इति वा तस्य तपः प्रतिष्ठाशील मुपशम आत्मा ब्रह्मेति स ब्रह्मभूतो
भवति साक्षिमात्रो व्यवतिष्ठते बन्धो ज्ञानकृतः ॥"—इति १४,१—१०।

अथ द्वितीय-खण्डे—

सैषा प्रथमा।

२ ३ १ २ २ २ ३ १ २
त्वमेतदधारयःकृष्णासुरोहिणीषुच।
१ २ ३ २ ३ १ २
परुष्णीषु*रुशत्पयः॥ १ ॥ १० †

२र २ २र १ र १ २ ३ ५
‡ हाउत्वमेतात्। एतदेतात्। आधारा२३४याः।
२ १र र २ २ २ ११ २ ११ १
कृष्णासुरोहिणा१इषू३चा। परुष्णा२३ईषू। रुशत्। पा
२ ५र र
२या२३४औहोवा॥ २०॥

२र १ १ १ १ २ १
त्वमेतम्नोहाइ। होइ। आधा१राया२ः। हाइ।
१ २ १ १ २ १
कार्ष्णा१सुरो२। होइ। हाइणी१षुचा२। होइ।
१० १ २१ १ ३ ५रर
पारुष्णाइषू२। होइ। रुशत्। पा२या२३४औहोवा॥२१॥
२र र १ २ १
आईत्वमेतात्। आ। आधा१राया२ः। आईका
२ १ २ १ १०
र्ष्णा१सुरो२। आइहाईणी१षुचा२। आईपारुष्णा

० "पुरुष्णीषु"—इति क०। † क० ७,६,२२,२।

‡ "औषि वार्षाहराचि"—इति आ० ग्रा० १, २, १५।

१　　२ १　　१　२　　५र र　　२ १
इषू२। आइ। रुशत्। पा२या२३४औहोवा। अभि

र २ १ २ १　　र २र १ र २ १ २ १　　२ १ २ र
स्फूर्जयं द्विष्मः। समोषाभिस्फूर्जयं द्विष्मः। अस्मभ्यञ्जातु

१ २ २ १ १ १ १
वित्तमा२३४५म ॥ २२ * ॥ १०

श्रुतकक्षऋषिरिन्द्रो गायत्री। अस्य सामर्थ्य मेवोपपादयति— हे इन्द्र! "कृष्णासु" कृष्णवर्णासु गोषु तथा "रोहिणीषु च" ["वर्णा दनुदात्तात्तोपधात्तोनः (४,१,३९)"-इति ङीप् †] "परुष्णीषु" रोहितवर्णासु ["परुष्णी पर्ववतीति यास्कः ‡] पर्वशः पर्वशो नानावर्णासु च गोषु "रुशत्" [रोचतेर्दीप्तिकर्मणः ¶] दीप्यमानं श्वेतम् "एतत्" परिदृश्यमानं "पयः" क्षीरं त्वम् "अधारयः" धारयसि। तस्मात् तद्बलं पूजयाम इति समन्वयः॥ १ ॥ १०

---

* भा० २प० २, २, १०—११।

† अनुदात्तत्तु "वर्णानामणतिनितान्तानाम् (२ पा०१०सू०)"—फिट् सूत्रे च।

‡ "इरावती परुष्णीत्याहुः पर्ववती भास्वती कुटिलगामिनी"—इति निरु०९,२६।

¶ "रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः। सूर्यं मस्मा वत्स माप घाचयाद् रुशद्वत्सा"—इति यास्कः नै० २,२०—नै० ६,१२।

अथ द्वितीया ।

१ २ १ २ ३ १ २ ४ ३ १
अक्रुक्षदुषसः पृश्निरग्रिय

३ १ २ ३ १ २ ३ २
उक्षामिमेति भुवनेषु वाजयुः ।

३ १ २ ३ १ २
मायाविनो ममिरे अस्य मायया

३ १ २ ३ २ ३ २ ३ १ २
नृचक्षसः पितरो गर्भमादधुः ॥ २ ॥ ११ *

२र १ २ १ र २
† हाउ । ३ । स्वर्विश्वम् । ३ । अक्रुक्षत् ।

२ १ १ २र १ २
। ३ । उषसःपृश्निरा २ग्रायाः । हाउ । ३ । स्वर्विश्वम् । ३ ।

१ र २ र २ १ र १ २र १
उक्षामिमे । ३ । तिभुवनेषुवा २जायूः । हाउ । ३ । स्वर्वि

२ १र र २ १र १ २र
श्वम् । ३ । मायाविनः । ३ । ममिरे अस्यमा २याया । हाउ

१ २ १ २ २ १ र १
। ३ । स्वर्विश्वम् । ३ । नृचक्षसः । ३ । पितरोगर्भमा २दा

* उ० ९,२,१६,२ ।

† "स्वर्ज्योतिषी द्वे"—इति ब्रा० ब्रा० ३,२,११ ।

१र    १    २    १    २    २
धूः । हाउ । ३ । स्वर्विश्वम् । २ । सुवा२३र्विश्वाउ । वा३ ।
२    १ १ १ १ १
ए३ । सुवा२३४५ः ॥ ८* ॥

१र    १र    २    १ र२    १
हाउ । ३ । ज्योतिर्विश्वम् । ३ । अरूरुचत् । ३ । उष
२    ४ ५    १र    १र    २
सःपृश्निरा३ । आयाः । हाउ । ३ । ज्योतिर्विश्वम् । ३ ।
१ र १र    १ र २    ४ ५    १र
उक्षामिमे । ३ । तिभुवनेषुवा३ । जायूः । हाउ । ३ ।
१र    २    १र र २    १ र    २
ज्योतिर्विश्वम् । ३ । मायाविनः । ३ । ममिरेअस्यमा३ ।
४ ५    १र    १र    २    १ २
या या । हाउ । ३ । ज्योतिर्विश्वम् । ३ । नृचक्षसः । ३ ।
२ १ र    २    ४ ५    १र    १र    २
पितरोगर्भमा३ । दाधूः । हाउ । ३ । ज्योतिर्विश्वम् । २ ।
१र    २    २    १र २ १ १ १ १
ज्योता२३इर्विश्वाउ । वा३ । ए३ । ज्योती२३४५ः ॥ १०† ॥ ११

अरूरुचदिति त्वेतां पवित्रो दृष्टवानृषिः ।
पवमानो देवता स्याच्छन्दश्च जगती स्मृता ॥
"उषसः" सम्बन्धी "पृश्निः" आदित्यः ‡ [ "पृश्निरादित्यो

*,† आ० गा० १प० ३, १, ९-१० ।

‡ "तथापि निगमो भवति 'ससृजोर: शृणोतु नः'-इत्युषस मन्त्र समार नाह साहचर्य्यादसहरत्वाद्वापि"—इति निरु० नै० २,१६ ।

भवति प्राप्नुत एनं ( नै० २,१४ ) वर्णः"-इति नैरुक्ताः ]"अग्नियः" अयमग्नी मुख्यः सोमः * "अरूरुचत्" रोचयति। सः "उक्षा" जलस्य सेक्ता पर्जन्यः सन् "मिमेति" भृशं शब्दायते। "भुवनेषु" भूतजातेषु "वाजयुः" तेषा मन्न मिच्छन्। "मायाविनः" माया प्रज्ञा तद्वन्तो देवाः "अस्य" सोमस्य "मायया" प्रज्ञया "ममिरे" निर्मितवन्तः [ सोमस्य एकैकांश-पान-वशात् अग्न्यादयः स्व-स्व-व्यापारेण जगत् सृजन्तीत्यर्थः ]। तस्याश्च मायया "नृचक्षसः" नृणां द्रष्टारः "पितरः" पालकाः देवाः † अङ्गिरसः‡ पितरो वा "गर्भम्" "आ दधुः" धारयन्ति ओषधीषु। [ स चात्र सूर्य्यात्मा सोमः स्तूयते। सूर्यरश्म्यानुगमाधीनवर्द्धनाच्चन्द्रस्य। यद्वा। अयमुषसः पृश्निः सविता अरूरुचत् रोचयति रोचते वा सर्वं शिष्टं समानं तत् सम्बन्धिनो नृचक्षसो नृणां द्रष्टारः पितरो जगद्रक्षकाः रश्मयो गर्भ मादधुर्वृष्ट्यर्थम् ॥

"मिमेतिभुवनेषु"—"बिभर्तिभुवनानि"—इति साम्न ऋचः पाठ-भेदः ॥ २ ॥ ११

---

* "अपगमनेनेति वा ।मरणेनेति वापसम्पादिन इति वा। अपिवाम मित्येतदर्थक मुपबन्ध मादृदीत"—इति निरु० नै० ६,१६।

† "पिता पाता वा पालयिता वा"—इत्यारभ्य "पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः"-इत्यन्त यास्कः नै० ४,२१ ।

‡ "अङ्गारेष्वङ्गिराः। अङ्गरा अङ्कना अञ्चना"-इतिनिरु० नै० ३,१७।

अथ तृतीया ।

२ ३ १उ ३ २ ३ १ २ ३ १ २ ३ १ २
इन्द्र इद्धर्य्योः सचा सम्मिश्ल आ वचोयुजा ।
१ २ ३१ २ ३ १ २
इन्द्रो वज्री हिरण्ययः ॥ ३ ॥ १२ *

१ २ १२र १ र २१ १ १ ११र २
† इन्द्रमिद्गाथिनोबृहत् । ए२ । इन्द्रमर्कोभिः । अर्कि-
१ १र र र र र र र र र र १र १ १ २
णोवा । औहोवा औहोवा औहोवा । औहोवाहाइ । ३। इन्द्रं
र र १ २ २ ५ १र १र र
वाणीरनू२३षताउ । वा३ । इ२३४डा । औहोवा । ३ । औ
१ २ २ १ २ २ र १
होवाइ । ३ । इन्द्रइद्धर्यो२३ः सचा३ । सम्मिश्ल आवचो२३यु

द्वयोर्मधुच्छन्दा वैश्वामित्रः द्रष्टा स्याद् गायत्री छन्दः इन्द्रो देवतेति । "इन्द्र इत्" इन्द्र एव "हर्य्योः" हरिनामकयोरश्वयोः ‡ "सचा" सह युगपत् "आ सम्मिश्लः" सर्वतः सम्यङ्मिश्रयिता । कीदृशयोः हर्य्योः ? "वचोयुजा" इन्द्रस्य वचनमात्रेण रथे युज्य-मानयोः सुशिक्षितयोरित्यर्थः । अयम् "इन्द्रः" 'वज्री' वज्रयुक्तः "हिरण्ययः" हिरण्मयः ¶ सर्वाभरणैरुपेत इत्यर्थः ॥ ३ ॥ १२

---

* छ० २, १, ८, ३=ऋ० १, १, १२, १—३ ।

† "बृहत्"—इति पा० ग्रा० ३,२,१२ ।

‡ "हरी इन्द्रस्य"—इति निः नै० १, १५, १ ।

¶ "ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि"—इति पा० ६, ४, १७५ ।

अथ चतुर्थी।

२ १ १ २ २ १ २
इन्द्रवाजेषुनोवसहस्रप्रधनेषुच।

१ २११ २२ १ १
उग्रउग्राभिरूतिभिः॥ ४ ॥ १२ *

२ २र र र २र १ २ २ र र १
जा३। औहोवा। ३। औहोहाइ। ३। इन्द्रोवज्रीहि

२ ५ २र र र २र
रा२३ण्ययाउ। वा३। ई२३४डा। औहोवा। ३। औ

१ २ २ र र१ २ १
होहाइ। ३। इन्द्रवाजेषुनो२३अवा३। सहस्रप्रधना

२ २र र र २र १ २ २ र
२३इषुचा३। औहोवा। ३। औहोहाइ। ३। उग्रउग्रा

१ २ २ १ ११११
भिरू२३तिभाउ। वा३। इट्। इडा२३४५॥ ११ ॥ १२,१३

हे "इन्द्र"! "उग्रः" शत्रुभिरप्रधृष्यस्त्वं "उग्राभिः" अप्रधृष्याभिः "ऊतिभिः" अस्मद्वक्ष्यपरपचाभिः "वाजेषु" युद्धेषु † "नः" अस्मान् "अव" रक्ष तथा "सहस्रप्रधनेषु च" सहस्रसङ्ख्याक-गजाश्वादि-लाभयुक्तेषु महायुद्धेष्वपि रक्ष॥ ४ ॥ १३

* ऋ० ८, ८, ३९, १।

† आ० गा० १प० ३, १, ११।

‡ "वाजे"—इति चतुःपञ्चाशत्सु द्विचत्वारिंशत्तमं नैघण्टुकम् २, १७।

अथ पञ्चमी ।

१ २ ३ १    २ ३ १ २ ३ १ २ १ २
प्रथश्चयस्यसप्रथश्चनामा
२ २     ३ १ २ ३ १ २
नुष्टुभस्यहविषोहविर्यत् ।
२ १ २ २     ३ २ ३ १ २
धातुर्द्युतानात्सवितुश्चविष्णो
३ १ २ २ ३ १ २
रथन्तरमाजभारावसिष्ठः ॥ ५ ॥ १४ *

१ २ १ २ २ २
† हाउप्राथाः । चयस्यसप्रथः । चना२ । मा३उवा३ ।
२ २ १ ३ ५ ३ ५ १२ २
ई२हा । ३ । ऊवा६ । ओ२३४वा । ई२३४डा । आनुष्टुभस्य
१ २ १ २ २ १२२ १
हविषः । हवा२इः । या३उवा ३ । ई२हा । ३ । ऊवा६
३ ५ ३ ५ २२१ २ १२ १ २
ओ२३४वा । ई२३४डा । धातुर्द्युतानात्सवितुः । चवा-
२ २ १२ २ ३ ५
२इ । ष्णा३उवा३ । ई२हा । ३ । ऊवा६ । ओ२३४वा ।
३ ५ २ १ २ १२ २ १ २ २
ई२३४डा । रथन्तरमाजभारा । वसा२इ । ष्ठा३उवा३ ।
१२ २ १ ३ ५ ३ ५ २
ई२हा । ३ । ऊवा६ । ओ२३४वा । ई२३४डा । ए३ ।
१
द्युत् ॥ ५ ॥

---

* ऋ० १, ८, ७, १ ।        † "वसिष्ठस्य द्वौ"—इति आ०ब्रा० २,२,२९ ।

१ २ १ २ २

प्राथाः। चयस्यसप्रथः। चना २। मा३१उवार३।

२रर १ र १र २ ५

इडा। ३। हाइ। हो। वाहा३१उवार३। इ२३४हा।

१र २ १ २ १ २ २रर

आनुष्टुभस्यहविषः। हवा २इः। या३१उवार३। इडा। ३।

१ र १र २ ५ १र१ र १र

हाइ। हो। वाहा३१उवार३। ई२३४हा। धातुर्द्युताना

१ १ १ १रर

त्सवितुः। चवा २इ। ष्णा३। उवा३। इडा। ३।

१ र १र २ ५ २ १

हाइ। हो। वाहा३१उवार३। ई२३४हा। रथन्तर

र १र र १ २ २ १रर

माजभारा। वसा २इ। ष्ठा३१उवा३इ। इडा। ३।

१ र १र २ ५ २ १ २

हाइ। होवाहा३१उवार३। ई२३४हा। ए३। द्यूता

१ १ १ १

२३४५ः॥ ६ †॥ १४

अपश्यत् प्रथइत्येतां त्रिष्टुभं प्रथनामकः।
वैश्वदेवीं भवेदेवं छन्दो दैवतनिर्णयः॥

"यस्य" वसिष्ठस्य "प्रथः" नाम पुत्रः यस्य भरद्वाजस्य "स प्रथः नाम" पुत्रः तयोर्मध्ये "वसिष्ठः" मम पिता "अनुष्टुभस्य" अनुष्टुप् छन्दसा युक्तस्य "हविषः" घर्माख्यस्य "यद्धविः" हविष्टा

०,† आ० ब्रा० १प० ३, २, ५—६।

अथ षष्ठी ।

३ १ २　　३ १ २ ३ २　　३ १ २
नियुत्वान्वायवागह्ययꣳ शुक्रो अयामिते ।
१ २　　३ १ ३ २
गन्तासि*सुन्वतोगृहम् ॥ ६ ॥ १५

२र　　२ १　　२ १　　२　　२ १
†हा उ । ३ । शुक्रम् । ३ । शुक्रꣳ शुक्रम् । ३ । शुक्रꣳ
२　　३ १ १ २　　२ र र　　१ २
शूक्रम् । २ । शुक्रꣳ शूक्रम् । नियुत्वान्वाया३वागा१
२ र　　१ २　　१ र
ही२ । अयꣳ शुक्रा आ३यामा१ता२३ । गन्तासि
१ २　　२र　　२ १　　२
सुन्वा३तोगृहा१हा२३म् । हाउ । ३ । शुक्रम् । ३ । शु-
१ २　　२ १　　२　　३ २ १ २
क्रꣳ शुक्रम् । २ । शुक्रꣳ शुक्रम् । शुक्रꣳ शूक्रम् । २ ।

पादकं "रथन्तरं" साम तद्रथन्तरं "धातुः" धातुसञ्ज्ञाद्देवात्‡ "द्युतानात्" द्योतमानात् सवितुश्च¶ विष्णोश्च§ "आजहार" आहृतवान् । [ हृग्रहोर्भ इति भत्वं रथशब्दोपपदात् तरतेः संज्ञायां भृतृवृजीति खच् । अरुर्द्विषदजन्तस्येति मुमागमः ॥ ५ ॥ १४

---

* "गन्तासि"—इति क० ।

† "शुक्रम्"—इति श्या० ग्रा०२,१,२९ ।

‡ 'धाता-विधाता' सर्वस्य इति नैरुक्तम् ३का० ११ख० १०श० ।

¶ 'सविता सर्वस्य प्रसविता'-इति नैरुक्तम् ३का० १०ख० ३१श० ।

§ 'विष्णु र्विशतेर्वा व्यश्नोतेर्वा'—इत्यादि नैरुक्तम् २का० ११ख० १५श० । एवञ्च विष्णुशब्देन सर्वव्यापी सर्वान्तर्यामीति सिद्धान्तः ।

अथ सप्तमी ।

१ २र ३ १ २ ३ १ २
यज्जायथा अपूर्व्य मघवन् वृत्रहत्याय ।
१ २ ३ १ २ ३ १ ० ३ १ २र
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतोदिवम् ॥ ७ ॥ १६ *

॥ द्वितीय-दशति ॥

२ १ १ २ ५र र २र २ १
शुक्रम् । शूर । क्रा२३४ । औहोवा । ए । शुक्रम् ।
३ ॥ ७ † ॥ १५

नियुत्वानिति गायत्र्या वायुं गृत्समदोऽब्रवीत् ॥

हे "वायो" ! ‡ "नियुत्वान्" नियुतो वाहनानि [ वायोः नियुतोरिति ( १,१५,१० ) निघण्टुः ] तैर्युक्तस्त्वं "आगहि" आगच्छ । "अयं" "शुक्रः" दीप्यमानः सोमः ते तुभ्यं "अयामि" [ यामेः कर्मणि लुङि रूपम् ] नियतो गृहीत आसीत् यतः 'सुन्वतः' सोमाभिषवं कुर्वतो यजमानस्य "गृहं" "गन्तासि" यातोसि ॥ ६ ॥ १५

* उ० ६, १, १९, १=ऋ० ६, ६, १२, ५—६—७—अष्टो १, २, १६=९, १, ९=२, २, १६ ।

† आ०गा० २प० ३, २, ७ ।

‡ 'वायुर्वातेर्वेत्ते र्वा स्याद् गति-कर्मणः'—इत्यादि नैरुक्तम् २का० १०१,२ख० ।

२र र        १र १    १    २  १   १

* एयज्जायथाः । अपूर्विया । हाउ । मघवन्वृ । हा-

१  १र    २    २  १    १  १

उ । त्रहत्याया । हाउ । तत्पृथिवीम् । हाउ । अ-

१     १   १र र र  र १ २    २ १

प्रथयाः । हाउ । एऔहोवाहीशाः । तदस्तभ्नाः ।

२   २ र १    १   २र र २   १

हाउ । उतोदिवाम् । हाउ । एऔहोवा३ । अस्

१ १ १

पया२३४५ः ॥ ८ ॥

२र र   र    २ र १   १   २ऽ ऽ

एहाउयज्जायथाः । अपूर्विया । होइ । ३ । हाउहाउ-

ऽ   २ १   १   २ऽ   २ १र

हाउ । मघवन्वृ । होइ । ३ । हाउ३ । त्रहत्याया ।

१   २ऽ   २ १   १   २ऽ

होइ । ३ । हाउ३ । तत्पृथिवीम् । होइ । ३ । हाउ

२ १   १   २ऽ   २र र र र १ २

३ । अप्रथयाः । होइ । ३ । हाउ३ । एऔहोवाहीशाः ।

२ १   १   २ऽ   २ र १   १

तदस्तभ्नाः । होइ । ३ । हाउ३ । उतोदिवाम् । होइ ।

२ऽ   २र र र   र   १११

३ । हाउ३ । एऔहोवा३ । अस् पया२३४५ः ॥ १० ॥

* "वायोः षट् स्वाराणि"—इति चा० आ० ९, २, १९ ।

२र र १र १ र २ र १
एहाउ। औहो२। यज्जायथाः। अपूर्विया। हो

१ १ १ र १ १
ववा२३होइ। मा। घवन्वृत्रहत्याया। होववा२३हो

१ १ र १ १ २र र
इ। तान्। पृथिवीमप्राथयाः। होववा२३होइ। एऔ

र र १ १ १ १ १ १ र र
होवाहौश्राः। होववा२३होइ। तान्। अस्तभ्नाउतो

१ १ २र र र १ र
दिवाम्। होववा२३होइ। एऔहोवा३। हस्दूडापया

१ १ १ १
२३४५ः॥ ११॥

१ १ १ १ १र र १ १ १ १
याज्जायाज्जा। यथाअपूर्वियाऔ३हो। हा२इया।

२ २ १ र १ २ १ १ २
औ३हो। माघवन्वृत्रहत्यायाऔ३हो। हा२इया। औ३

२ १ र २ २ १ १ २ २
हो। तात्पृथिवीमप्राथयाऔ३हो। हा२इया। औ३हो।

१ र र २ २ १ १ २
तादस्तभ्नाउतोदिवा। मौ३हो। हा२इया। औ

र र २ १ १११
३होवाहाउवा३। पया२३४५ः॥ १२॥

२ १र२ २ १ २१ २ १ २ १ १ २
ऊ। वौहो१इ। ३। यज्जायथाः। अविपूया। म

१ २ १　२ १ १२१　१ १ २ १　१ १ २ १　२
द्यावन्व्। अन्तरिक्षाया। तत्पृथिवीम्। अप्राथयाः। त
१ २ १　२ १ २ १　२　१२१　२
दस्तम्भाः। उतोदिवाम्। ऊ। वौहोइ। २। ऊ।
१२१　५　२　२　२　१
वौहो१२। उऊवा३हाउ। वा३। अस्॥ १३॥

१२　२　२　२　३　५　२१ १
योरयिंवोरा३यिन्तमाः। योद्युम्ना२३४इर्द्यू। म्नाव
२　३　५　२२१　२　२
त्तमास्३ः। सोमःसु२३४ताः। साइन्द्रतायेऽ३। अस्ति
३　५　३२　१　५　६　५　५
स्वार३४धा। एतेइ। मार३४दाः। उऊवा६हाउ। वा।
१
अस्॥ १४॥

१२　२　२ १　२ १　२　१
* हाउहोहाइ। ३। अन्तरिक्षꣳस्वर्दिवञ्जग। न्मा।
१२　२२　१　१२　२२　१
(त्रिः)। परात्परमैस्य। ता। परात्पर। मैरय। ता।
१२　२ २　२　१२　३१२　२　२१　२ १२
परात्परमैरय। त। औहोवाहाउ। वा। ए। यज्ञो
२१२१२१२२२ १२ १२　२१　१२ २
दिवोमूर्द्धादिवमादनोघर्मोज्योतिः॥ १५॥

* "विश्वोकोपि स्वरीयाणि"—इति आ० ग्रा० ३, १, १९।

१र र १ १ १ १ १ १
हाउहोहाइ। ३। अन्तरिक्षꣳसुवर्दिवङ्गग। न्मा।

१ र र १ १ १र र १
(त्रिः)। परात्पर मैरय। ता। परात्पर मैरय।

१ १र र १ १ १र १र १
ता। परात्पर मैरय। त। औहोवाहाउ। वा।

१र १ १ १ १र र १ १र १ १र२र १ र १र
ए। पृथिव्यन्तरिक्षन्द्यौरापःकनिक्रदात्सिन्धुरापोमरुतोमा

र १र र
दयन्ताङ्घर्मोज्योतिः॥ १६॥

१र र १ऽ १ १र र र
हाउहोहाइ (इत्यादिपूर्वपाठः) ता। दिवोमूर्द्धानꣳ

र १ १ १ ३ ५ १ र १ १र र
स मैरयन्। होये३। हो२३४वा। यशोघर्मोज्यो

र १ १ १ ३ ५ १र र
तिः। यशःसमैरयन्। होये३। हो२३४वा। तेजो

१ १र र १र र १ १ १ ३
घर्मोज्योतिः। तेजःसमैरयन्। होये ३। हो २ ३

५ १ १ १र र १ र १ १ १
४वा। सुवर्घर्मोज्योतिः। सुवःसमैरयन्। होये३।

३ ५ १र १ १र र १र र १
हो २ ३ ४ वा। २। ज्योतिर्घर्मोज्योतिः। ज्योतिःसमैर

१ १ ३ २ १ऽ १ १र र
यन्। होये३। हो२३४५वा६५६। घर्मोघर्मोज्यो

तिः॥ १७॥

१र  र  १ऽ  १र  २र१  २

* हाउहोहाइ (इत्यादि) ता। औहोवाहाउ। वा

२र १२२ १ २ २र १ ११रर २ २र १ र

ए। इडायच्च हस्कृतिंयच्च । ए। मनओजोयच्च। ए। मनो

२ १र २ २र १ २ २र २१र र २

महिमानंयच्च। ए। यशस्त्विषिंयच्च। ए। प्रजवर्च्चायच्च।

२र १र २ २र १ २१ २ २र १ र

ए। पशून्विशंयच्च। ए। ब्रह्मक्षत्रंयच्च। ए। स्वर्ज्योति-

२

यंच्च ॥ १८ ॥

१र र  १ऽ  २ र र

हाउहोहाइ। (इत्यादि) ता। यज्जायथा। अ

र१ २ २ १२ २ र र१

पूर्वाया। मघवन् वृत्रहत्यायाया। या। तत्पृथिवीमप्राथा

२ २ र र१ २ १२ र

याः। तदस्तभ्नाउतोदाइवाम्। हाउहोहाइ (इत्या

२ १र २र२ र २र १रर र१ र

दि) त। औहोवाहाउ। वा। ए। तेजोघर्मः सङ्गी

२ र १ २१ र२ र२र १र २ र १२१ २र

डन्तेभिग्रमतीर्वायुगोपास्तेजस्वतीर्मरुद्भिर्भुवनानिचक्रदुः।

२ ११११ २ १११

इट् इडा२३४५। ई२३४५॥ १९॥

---

* "पञ्चानुगानम्"—इति भा० ग्रा० ३, १, २, १९।

१र र १र र २ १ १र
हाउहोवा । ३ । परात्परमैरय । ता । परात्प
र १ १ १र र २ १ १र १र १
रमैरय । ता । परत्परमैरय । त । औहोवाहा
१ १ १ २र १ १र र २र १
उ । वा । इन्द्रो । धेनुः । ३ । आपो धेनुः ।
१र २र १ २ १ २र १ १र
३ । भूमि र्धेनुः । ३ । अन्तरिक्षंधेनु । ३ । द्यौ
२र १ १ १र १ १ २र १
र्धेनुः । ३ । परं धेनु । ३ । व्रतं धेनु । ३ ।
२ १ २र १ १ २र १ १र
सत्यं धेनु ३ । ऋतं धेनु । ३ । इडा
२र १ १ २र १ १र २र १
धेनुः । ३ । स्व र्धेनुः । ३ । ज्योति र्धेनुः ।
३ ॥ २० ॥

१र र १S १ १र २र
हाउहोवा । ३ । (इत्यादि) ता । यज्ञा यज्ञाः ।
२१र र २१र २ १ २१ ५ १ २
अपूर्विया । अपूर्विया३ । आपूर्वा२३४या । मघवन् क् ।
२१ र२ २१र २ १ २१ ५ १
त्रहत्याया । त्रहत्याया३ । त्राहत्या२३४या । तत्पृ
२१र र २ १ २ १ २ २ ५
थिवीम् । अप्राथयाः । अप्राथयाः३ । आप्राथा२३४याः ।
१ २ र २१र २ १२ २ १ २
तदस्तभ्नाः । उतोदिवाम् । उतोदिवा३म् । ऊतो

२ ५ १र र २
दा२३४इवाम्। हाउहोवा। ३। (इत्यादि) न।
१र १र २ २ १रर २१ र २ र र १ र १र १र
औहोवाहाउ। वा। तेजोघमॅःसङ्कौडन्तेवायुगोपास्ते
२ र १ २ १ १र
जस्वतीमॅरुक्मिर्भुवनानिचक्रदुः॥ २१॥

१ १ १ २ १ २ २
हा२ऊवाक्। ३। होवा। २। होवा३। हाउवा।
१र १र १ २ १र र १र १ २ १र २ १ र २ १ १ १
ए। तोकम्प्रजाङ्गर्भो नोयमद्धमह्याचपराचपर्थिभिस्वर-
३ १ १ १ १
न्ता२३४५ः॥ २२॥

१ १ १ २ ११ २
*हा२ऊवाक्। ३। होवा। ३। अयॅसम्निङ्ते३।
१ १ १र १र र २ १र १र १ १
होइ। यस्माद्यावापृथिवी भूवनानिचक्रदुः। हो
२ १ २ १ १ १र १र १ १र २ र १
इ। अयॅसम्निङ्ते३। होइ। यस्मादापओषधयोभुव-
१र १ १ २ १ २ १ १ १र
नानिचक्रदुः। होइ। अयॅसम्निङ्ते३। होइ। यस्मा
२ १ र १र १ १ २ १ २
त्समुद्रियाभुवनानिचक्रदुः। होइ। अयॅसम्निङ्ते ३।
१ १ १र १ र १र १र १र १ १ १
होइ। यस्माद्दिश्वाभूताभुवनानिचक्रदुः। होइ। हा

* "वरुमानम्"—इति आ० ब्रा० ३,१,१९।

१　　१ २　　२　　२र　१ २
२ऊवाक् । ३ । होवा३ । हाउवा । ए । आपः । २ ।
२ १११९
आपा२३४५ः ॥ २३ ॥

१　१　　१ २　　२र　　३ २र १
हा२ऊवाक् । ३ । होवा । ३ । येभिर्विंया । श्वमैरा
२र　　३ २र १　　२र　र २
या२ः । तेभिर्विया । अच्चीमादा२म् । येभिर्भूताम् ।
२ १ १　　१र　१र १ १र२　　१र　　२र १
सच्चःसाहा२ः । तेभिस्तेजआपः । आपा२ । येभिर्व्यं
२१र २　　२　　२र　१ २　　१ ३
न्तरिक्षमैरया३ः । हाउवा । ए । आपः । २ । आपा
१ १ १
२३४५ः ॥ २४ ॥

१ १　　१ २　　१ र　र
हा२ऊवाक् । ३ । होवा । ३ । यज्जायथा । अ
१　　१　　१　　१
पूर्वो२ । वीया२ । मघवन्वृत्रहाहो२ । त्याया२ । तत्
र　　१　　१　र
पृथिवीमप्राहो२ । थायाः२ । तद स्तभ्नाउतोहो
१　　१ १　　१ २
२इ । दाइवा२म् । हा२ऊवाक् । ३ । होवा । २ ।
२　　२　　२र　१र र ११　र २र १
होवा३ । हाउवा । ए । तेजोघर्मःसञ्चीडन्तोग्नि

२र र १ र २र१र २र १ २१ २र २ १ १ १ १
क्षुमतीर्वायुगोपास्तजस्वतीर्मरुद्भिर्भुवनानिचक्रदु २ ३ ४ ५ः ॥ २५ * ॥ १६

नृमेध-पुरुमेधौ द्वाहषी ऐन्द्र्या अनुष्टुभः ॥

हे "अपूर्व्य" त्वत्तोव्यतिरिक्तेन पूर्वेण वर्जित ! † । हे "मघवन्" मंहनीयतम धनवन्निन्द्र । "वृत्रहत्याय" ‡ वृत्रासुरहननाय "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोसि "तत्" तदानीमेव "पृथिवीं" प्रथमानाम् "अप्रथयः" प्रसिद्धां दृढाम-करोः । "उत" अपि च "दिवं" द्यां द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धा मकार्षीः ॥ ईदृशं वीर्यं त्वदन्यस्य न भवतीत्यर्थं द्योतयितुम् अपूर्व्येति पदम् ॥ ७ ॥ १६

इति श्रीमत्सायणार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने षष्ठस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

* आ० गा० १प० ३, २, ९—२५ ।

† 'अपूर्व्या पूर्वेषु मध्यरात्रादिकालेषु विद्यमाना'—इति१प०२,७, ४र्थर्चि सायणः । 'यतः पूर्वं नास्ति सा अपूर्वा, अपूर्वा एव अपूर्व्या, स्वार्थिकस्तद्धितः ; प्रथमेत्यर्थः'—इति च तत्रैव वि० ।

‡ 'अथास्य कर्म—रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत्'—इति नैरुक्तम् ७अ० १०ख०। 'वृत्रवधो मेघवधः'—इति च तत्रत्य-भाष्यम् । "तत्कोवृत्रोमेघइति नैरुक्ताः । त्वाष्ट्रोऽसुरइत्यैतिहासिकाः । अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति"—इति निरु० नै०२,१६ ।

१ २ १ २ १ २
हिहियऊ२। ३। उद्पप्तम्। उद्पप्तम्।२।
२र १र २ २ १ २र १ २
ऊर्द्धानभाᳲस्यक्षषि।३। व्यद्यौत्सम्।३। अततनम्।
२र २र २र १ १र १ २ १
३। हाउ। हाउ। हाउ। यद्वर्चोहिरण्य। स्या।
१ २र १२र १ र २ १ २१ २१ १र १ १ १र
यद्वावर्चोगवामू। ता। सत्यस्यब्रह्मणो व। चाः। तेन
२र १ १र १ १ २ १ २
मासᳲहजाम। साइ। हिहियऊ२।३। उद्पप्तम्।
२र मर र २ १ २र १ २
३। ऊर्द्धानभाᳲस्यक्षषि।३। व्यद्यौ२सम्।३। अतत
२ऽ २ २र १ २ र१र र २ १
नम्।३। हाउ३वा। ए। उद्पप्तमूर्द्धानभाᳲस्यक्षषिव्य
२र १ २ २ १ १ १११
द्यौत्सम तनम्। ए३। पिन्वस्वा२३४५॥ ८ *॥

२र १र १ २र २र
हाउ।३। प्रथे।३। प्रत्यष्ठाम्।३। हाउ।३।
१ २र १ २ १ १ र १ २र१ र २ २ १
यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवामूता। सत्य
२ १ २र१ १ १र २र १ १र १ २र
स्यब्रह्मणोव। चाः। तेनमासᳲहजाम। साइ। हाउ।

* आ० मा० १प० ५, २, ८।

अथ एकादशी।

२ ३ १२ ३ १ २ ३ १२
सघस्त्वमिन्द्रदधोज

३क २ ३ १ २
ईभ्रेस्त्वमस्तोविरप्शिन्।

१र १ २र २३ १ २ ०र १र
३। प्रथे। ३! प्रत्यष्ठाम्। ३। स्ताउ३। वा। ए। प्रथेप्रत्य

२र २र २१ र २ १११२
ष्ठाम्। ए। यच्छुम्नवर्ज्योतीर२३४५ः॥ १० *॥ ३९

वामदेव ऋषिः। अनुष्टुप् छन्दः। आग्यासने विनियोज्या।

"हिरण्यस्य" हित-रमणीयस्य एतन्नामकस्य "यद्वर्चः" तेजो-ऽस्ति। "यद्वा" अपिच। "गवाम्" एतन्नामकानां † "यद्वर्चः" तेजोऽस्ति। "उत" अपिच। "सत्यस्य" सर्वैः सम्मतस्य ‡ "ब्रह्मणः" यद्वर्चोऽस्ति तेन तैः "मा" "संसृजामसि"¶ सम्पादयामः। धन-वन्तः पशुमन्तः श्रोत्रिया भवेमेति तात्पर्यार्थः॥ १०॥ ३९

---

* वा० सा० ४प० ५, २, १०।

† "हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हित-रमणं भवतीति वा हृदयरमणं भवतीति वा हर्यतेर्वा स्यात् प्रेप्साकर्मणः"—इति निरु० नै०२,१०।

‡ गौरिति निघण्टौ धनकर्म (१,१,१—१,४,४—१,५,२—१,११,४—१,१५,७—२,११,१०।

¶ "सत्यं कस्मात् सत्सु तायते सत्प्रभवं भवतीति वा"—इति निरु० नै०३,१३।

‖ "इदन्तोमसि"—इति पा०७,१,४६।

२ ३ १ २ १ २र २र ३ १ २
क्रतुन्न नृम्णꣳ स्थविरञ्च वाजं
३ १ २ ३ १ २ २ १ २
वृत्रेषु शत्रून्त्सहना कृधी नः ॥ ११ ॥ ४०

२र १ २ १ २ १
* हाउ। ३। आहुवी। ३। ओहा। २। ओ
२ २र १ १ १र
हा३। हाउ। ३। सहस्तन्नइन्द्र दध्यो२जाः। आया
१ऽ २र १ १र २ २
२उ। ऊ। आयाउ। ३। ईशे ह्यस्य महतो विरा२
१ १र १ऽ २र १ १
प्शायिन् †। आया२उ। ऊ। आयाउ। ३। क्रतुन्न
१ १र १ऽ २र १
नृम्णꣳ स्थविरञ्च वा२जाम्। आया२उ। ऊ। आया
२ १र २ २ १ १र
उ। ३। वृत्रेषु शत्रूंत्सुहना कृधा२इनाः। आया२
१ऽ २र १ २र १
उ। ऊ। आयाउ। ३। हाउ। ३। आहुवी।
१ २ १ २ १ २ २ऽ २र
३। ओहा। ओहा। ओहा३। हाउ३। वा। ए
२र १र २ १ २ २ १र २ २ २ १ १ १ १
आयुर्द्धन्त्रस्मभ्यं वर्चो धादेवे भ्या२३४५ः ॥ १७ ‡ ॥ ४०

* "कश्यपव्रतं द्वयानुगानम् * * * गवांव्रते"—इति चा० मा० ३, २, २० तम प्रथम मिदम्।

† "प्शाइन्"—इति क० पु० पाठः।

‡ चा० मा० ३प० ५, २, १७।

अथ द्वादशी ।

२ ३ १ २　　३ १ २　　३ १ २
सद्दर्षभाःस्सद्दवत्साउदेत

१ २　३ २　३ १ २
विश्वारूपाणिविभ्रतीर्द्वूयध्नीः ।

३ २ ३ २ ३ १ २　　३ २
उरुःपृथुरयंवोअस्तुलोक

३ १र　२र　३ २ ३ १　२
इमाआपस्सुप्रपाणाइहस्त ॥ १२ ॥ ४१

॥ चतुर्थ-दशति ॥

२　　२ १　१र　१ २र　१र　२
* हाउश्वा । सद्दर्षभाःसद्दवत्स । उदेत । हाउ३

हे "विरप्शिन्" विशेषेण रपणं व्यक्त-वचनं तदस्यास्तीति विरप्शी, तस्य सम्बोधनं हे विरप्शिन्! विशेषेण स्तोत्र-विषये सत्यवाक्य? "इन्द्र!" "ते" तव "सहः" शत्रूणा मभिभवन-रूपम् "ओजः" बलं "नः" अस्मभ्यं "दधि" देहि [ददाते-श्छान्दसं रूपं लोडि हेर्धिभावादिना] यस्मात् त्वं तस्य "अस्य" "महतः" बलस्य "इशे" ईश्वरो भवसि । अतो हे इन्द्र! "नः" अस्माकं "क्रतुं न" यज्ञमिव "नृम्णं" धनं "स्थविरम्" अतिशयेन प्रवृद्धं, "वाजं" बलं च "अधि" कुरु । किञ्च नोऽस्माकं "शत्रून्" "हत्रेषु" आवरकेषु उपायेषु "अधि" कुरु ॥ ११ ॥ ४०

---

* "निरूपाभिनिरूणो हा वनकृते वा"—इति षा० ब्रा० ३, २, २७ । त च प्रथम मिदम् ।

१ २ ३१२ ३१२ ३ १ ३१ २ २ २१ २ १
वा। विश्वारूपाणिबिभ्रतीद्य्ध्नीः। हाउश्वा। उरुः-
३ १ २ ३ १ २ ३ २ ३ १ २१ ३ १२ २ ३
पृथुरयम्बोअस्तुलोकः। हाउश्वा। इम। आपःसुप्र-
२ ३ १२ ३ १ २१ १ २ १
पाणाइहस्त। हाउश्वा। अस्मिष्टयेश्हस्मा॥१८*॥ ४१

हे "सहर्षभाः" ऋषभैः सहिताः! "सहवत्साः" वत्सैः सहिताः! गावः! "इयध्नीः" सायं प्रातः काले द्विविधान्यूधांसि यासां ता इध्नीः इय्नाः! "विश्वा" सर्वाणि नाना "रूपाणि" "बिभ्रती" बिभ्रत्यः यूयम् "उदेत" उद्गच्छत सम्यगाः आगच्छत। किञ्च। "उरुः" बहुः "पृथुः" विस्तीर्णः [ उरुः पृथु रिति शब्दाभ्याम् आयाम-विस्तारो उच्येते। "अयं लोकः" "वः" युष्माकम् "अस्तु" भवतु। "इमा आपः" "इह" लोके भूतले अस्मिंस्थाने "सुप्रपाणाः" सुखेन प्रकर्षेण पातुं योग्याः सन्तु तस्मादिह वशीभूताः "स्त" भवत उपविशतेति पूर्वेण सम्बन्धः॥ १२ ॥ ४१

इति श्रीमत्सायणाचार्य्य-विरचिते सामवेदार्थ-प्रकाशे छन्दो-व्याख्याने षष्ठस्याध्यायस्य चतुर्थः खण्डः॥ ४॥

---

* आ० गा० ३प० ५, २, १९।

अथ पञ्चम-खण्डः—

सैषा प्रथमा ।

२ ३ १ २　　३ १ ३ १ ३ १ २
अग्न आयूꣳषि पवस आसुवोर्जमिषञ्च नः ।
२ ३ २　३ १ २
आरे बाधस्व दुच्छुनाम् ॥ १ ॥ ४२*

२र १　२र　१　१ २ १र र
† भ्राजा । २ । भ्राजा३१उ । वा२ । अग्न आयूꣳ
२ र　१र २१र २ १　२　२र१र र २　१ र
षि पवसे । आसुवोर्जमिषञ्च नः । आरे बाधस्व दुच्छुनाम् ।
२र १　२र　१　२र　१र
भ्राजा । २ । भ्राजा३१उ । वा२ । ए । भ्राज ।
३ ॥ ५‡ ॥ ४२

चतुर्दशाग्नआयूंषीत्याद्यास्तत्र जगत्यसौ ।
विभ्राट् त्रिष्टुप् चित्रमिति गायत्रो द्वादशेतराः ॥
आद्याग्नेः पवमानस्य स्तुतिः सौर्यस्त्रयोदश ।
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे ॥
शतं वैखानसा एवं दृष्टवन्तो महर्षयः ।

---

* ऋ० ७, २, १० ३=उ० ९,२,१०,२ ।

† "सूर्यस्य भ्राजाभ्राजे द्वे"—इति ग्रा० गा० २, २, २८ । तत्र प्रथममिदम् ।

‡ ग्रा० गा० ३प० ९, १, ५ ।

अथ द्वितीया।

३ २ ३ १ २ ३ २उ
विभ्राड्वृहत्पिबतुसोम्यम्मध्वा
३ १ २३१२३१ २
यद्दधद्यज्ञपतावविह्रुतम्।
१ २ ३१ २३ १२३ १२
वातजूतोयोअभिरक्षतित्मना
३ १ २ ३ १२ ३२
प्रजाःपिपर्त्तिबहुधाविराजति॥ २॥ ४३ *

१ २ १ २ १ १ २
† हाहाउ। ३। हुवा। ३। हस्। ऋतम्मे।
२ १२ २ १ १२
३। विभ्राड्वृहत्पिबतुसोमिया२म्माधू२। आयुर्दधद्य
२ १ १२ २ २ २
ज्ञपतावबा२इह्रूता२म्। वातजूतोयोअभिरक्षता२इ
१ २१२ २ १ १ २उ
त्माना२। प्रजाःपिपर्त्तिबहुधाविरा२जाती२। हाहाउ।

हे "अग्ने" पवमान-रूप! अस्माक मायूंषि अन्नान्येतन्नाम-कानि वा "पवसे" क्षरसि "नः" अस्माकम् "ऊर्जम्" अन्नरसम् "इषम्" अन्नं च "आसुव" आभिमुख्येन प्रेरय। किञ्च। "दुच्छूनां" [रक्षोनामैतद्] रक्षांसि "आरे" अस्मत्तो दूरएव ‡ "बाधस्व" सम्पीडय॥ १॥ ४२

---

* उ० ६,३,५,१=ऋ० ८,८,१८,२।

† "वायोर्विकर्णभासे द्वे सत्योर्वा"—इति ब्रा० ब्रा० ३,३,२८। तत्र विकर्णं नाम प्रथममिदम्।

‡ "आरे"—इति दूरनामसु पञ्चमं नैघण्टुकम् ३, २६।

१ २ १ २ १ २ १२
३। हुवा। ३। इस्। ३। ऋतम्मो। ३। औचो

१२ १ १ २ १ २ १२ १२
वाहाउ। वा। फा२ट्। ऋतम्मो। ३। औहोवा

१ १ १ २ १ २ १२ १२
हाउ। वा। फा२ट्। ऋतम्मो। ३। औहोवा

१ १ १
हाउ। वा। भ्रा२ट्॥ ७*॥ ४३

विभ्राण्नामक एतान्तु-सूर्य-पुत्रो ददर्श सः।

"विभ्राट्" विभ्राजमानः विशेषेण दीप्यमानः† सूर्यः "बृहत्" परिवृढं "सोम्य" सोममयं‡ "मधु" पिबतु। किं कुर्वन्? "यज्ञपतौ" यजमाने "अविह्रुतम्" अकुटिलम्¶ अकण्टकम् "आयुर्दधत्" अन्नं वा कुर्वन् §। "यः" सूर्यो "वातजूतः" वातेन वायुना प्रेर्यमाणः सन् ‖ "त्मना"+ आत्मना स्वयमेव "अभि रक्षति" सर्वं जगदभिरक्षन् पालयति [रश्मि-चक्रस्य वायु-प्रेर्यत्वात् सूर्यस्यापि तत्प्रेर्यत्वम्] स सूर्यः "प्रजाः" "पिपर्ति" वृष्ट्यादि-प्रदानेन

---

* आ० गा० २प० ६, १, ७।

† विभ्राडिति ज्वलतिकर्मणो "भ्राजते"—इत्यस्य रूपम् ( नै० १,१६,१ )।

‡ "सोम मर्हति यः"—इति पा० ४, ४, १३७।

¶ "ह्वृ कौटिल्ये (भ्वा० प०)"—इत्यस्येदं रूपमिह विह्रुतमितीत्यभिप्रायः। "ह्रु ह्वरेश्छन्दसि (७, २, ३१)"—इति ह्रु आदेशः। "अविह्रुत मव्यथित मायुः"—इति वेददीपः श० मा० मा० स० ३१, ३०।

§ "आयुः"—इत्यन्ननामसु चयोविंशं पदम् २, ७।

‖ "जु गतौ (भ्वा०पा०)"—इत्यस्यैव विजन्तस्येदं जूत इति रूपमित्यभिप्रायः।

+ "मन्त्रे ष्वाङ्यादेरात्मनः"—इति पा० ६, ४, १४१।

अथ तृतीया।

१ २ २ २ ३ १ २ ३ १ २ ३
चित्रन्देवानामुदगादनीकं

१ २ ३ १ ३ १ २ ३ २
चक्षुर्मित्रस्य वरुणस्याग्नेः।

२ ३ १ २ ३ २ ३ १ २ ३
आप्राद्यावापृथिवी अन्तरिक्षꣳ

१ २ ३ १र २र ३ १ १
सूर्य आत्मा जगतस्तस्थुषश्च॥ २॥ ४४ *

१ १ १ १ १ १
† उवी२उवि। उविद्दो२उवि। त्रिः। इती२इति।
१ १ १ १ १ १
इतिद्दो२इति। त्रिः। असी२असि। असिद्दो२अ
१ र २ र १ २ १र १ १
सि। त्रिः। अह्रुस्चोदिवम्पृथिवीम्। असी२असि।
१ १ १ २ ३ १र र २र र
असिद्दो२असि। एवन्त्रिः। पतिर। अपामोषधीना

पूरयति पालयति वा। "बहुधा" "विराजति" विशेषेण दीप्यते च॥

"पिपर्त्ति"-"पुपोष"—इति, "बहुधा"—"पुरुधा"—इति च पाठो॥२॥ ४३

* ऋ० १, ८, ७, १।

† "आदित्यव्रतम्"—इति आ० ब्रा० ३, १, २९।

१　२　१२　३　५　१
३म् । औ३ । पताइरा२३४सी । एवम् त्रिः । चा
१२र१र२र१　२र१र२　१　र२र र १र र
इ । चन्देवानामुदगादनीकम् । वाइश्चेपान्देवाना॰
२१　२१र　२१र　१　१र
समिदजस्रञ्ज्योतिरातमा२म् । वो३ । ३ । चायुर्यन् ।
१　१　२१२१　२र १र　२
३ । अवः । ३ । चक्षुर्मित्रस्यवरुणस्याग्नेः । सुवःस॰
३२　१२　२१र　१　१　१
सर्पस॰सार्पा३ । जनावन॰सुवा२ःसुवः । जना२वना
१　१　१र र र र　र ०
२म् । सुवा२ःसुवः । त्रिः । आप्राद्यावापृथिवीआन्त
२　२　र र र　२ र　र
री२३च्चा३म् । हपिप्रहपीऐही । ३ । अस्तोषतस्वभा
र र र　२ र　र　र र र　२र र र
नवाऐही । विप्रानविष्टयामताएही । ग्रावाणोवर्हिषिप्रि
र र र　२　र र र　१　१
याऐही । इन्द्रस्यर॰ष्मिन्नृषादैही । इन्द्रा२स्यरा२ ।
१　२　र र र
ष्मिया२म् । वृहदिन्द्रस्यर॰ष्मियन्नृषादैही । ३ । एवं
१र र र　०　२　२
त्रिः । सूर्यआत्माजगतस्तास्थुषा२३श्चा३ । अन्तश्चरति
र र र र　१ र र र र　र र
रोचनाऐही । ३ । अस्यप्राणादपानता । ऐही । ३ ।

२ र र र र १र२र र र १ऽ
व्यश्व्यन्नभिचिषोदिवामैची । ३ । प्रोणतिप्रोणति । ३ । प्रो ।
१र १ २र २ ४र र २ १र १र
एति । २ । प्रो२३ । एता३४औहोवा । ए३ । देवा
र र ११११
दिवाज्योती२३४५: ॥ १ * ॥

१र र १र १र १र १र र २ र
† हाउहाउहाउ । भ्राजाओवा । ३ । उदुत्यञ्जा । ३ ।
२ १ र र र ० २ १र र १र १र
चित्रन्देवानामुदगादनी२३का३म् । हाउ२हाउ । भ्राजा
१र र १र १ ०
ओवा । ३ । तवेदसम् । ३ । चक्षुर्मित्रस्यवरुणस्यथा२३
२ १र र १र १र १र र १र र
आ३इ: । हाउ२हाउ । भ्राजाओवा । ३ । देवंवहा ।
१र र र १ र ० १ १र १र
३ । आप्राद्यावापृथिवीआन्तरी२३क्षा३म् । हाउ२हाउ ।
१र १र १र र र र १र र र
भ्राजाओवा । ३ । तिकेतवः । ३ । सूर्यआत्माजगतस्ता
० २ १र र १र १र १र र २ र
स्थुषा२३आ३ । हाउ२हाउ । भ्राजाओवा । ३ । दृशे
र १र र र ० २ १र
विश्वा । ३ । सूर्यआत्माजगतस्तास्थुषा१३आ३ । हाउ

* आ० ग्रा० ३प० ६, १, १ ।
† "सौर्यातिषङ्गः"—इति आ० ग्रा०३, २, १९ ।

२  १र २र १र र  २ र  १
२चाउ। भ्राजाओवा। ३। यसूर्यम्। २। यसूर२३रि
२ २ २ २र १र र र ३ १११
याउ। वा२। ए३। देवादिवाज्योती२३४५ः॥ ४*॥

१र १र १ र २ १र १ र २
†चाउ। ३। भ्राजाभ्राज। ३। आयूरायुः।
१ २ र १ र २ २ १ र र र
३। उदुत्यञ्जा। ३। तवेदसम्। ३। चित्रन्देवाना-
० २ १र १र १ र २ २
मुदगादनी२३का३म्। चाउ। ३। भ्राजाभ्राज। आ
१ र २ १र २ र १ ० २
यूरायुः। देवंवहा। ३। चक्षुर्मित्रस्यवरुण। स्याआ२३ग्ना
१र १र १ र २ १र १ र २
इः। चाउ। ३। भ्राजाभ्राज। आयूरायुः। ३।
१ र २ १र र र र र ० २
तिकेतवः। ३। आप्राद्यावापृथिवीआन्तरी२३क्षा३म्।
१र १र १ र २ १र १ र २ १ र २
चाउ। ३। भ्राजाभ्राज। आयूरायुः। २। इयोवि
र १र र र ० २ १र
श्वा। ३। सूर्यआत्माजगतस्तास्थुषा२३श्चा३। चाउ। ३।
१र १ र २ १र १ र २ १ र २
भ्राजाभ्राज। ३। आयूरायुः। ३। यसूर्यम्। ३।

---

* आ० ब्रा० ३प० ६, २, ४।

† "मित्रावरुणयोः स्तोत्रमित्याचक्षते"—इति आ० ब्रा० २, २, १९।

१ २ २ २ १२१२ २ २ ३ १ १
यसू २ ३ रियाउ। वा३। ए३। देवादिवाज्योती २ ३
१ १
४ ५ः॥ १८ *॥ ४४

कृत्सः। "देवानां" दीव्यतीति देवा रश्मयः तेषां, देवानामेव वा प्रसिद्धानाम् † "अनीकं" तेजः समूह रूपं "चित्रम्" आश्चर्यकरं सूर्यमण्डलम् "उदगात्" उदयाचलं प्रयासीत्। कीदृशम्? "मित्रस्य वरुणस्याग्नेश्च चक्षुः" उपलक्षणमेतत्, एतदुपलक्षितानां जगतां चक्षुः प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा। उदयं प्राप्यैव "द्यावापृथिवी" दिवं च पृथिवीं च "अन्तरिक्षं" च "आप्राः" स्वकीयेन तेजसा "आ" समन्तात् अपूरयत्। ईदृग्भूत-मण्डलान्तर्वर्त्ती सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा "जगतः" जङ्गमस्य "तस्थुषश्च" स्थावरस्य च "आत्मा" स्वरूपभूतः स हि सर्वस्य स्थावर-जङ्गमात्मकस्य कार्य-वर्गस्य [कारणाच्च कार्यं नातिरिच्यते। तथाच पारमर्षं सूत्रम् ‡—"तदनन्यत्वमारम्भण शब्दादिभ्यः"—इति] यद्वा। स्थावर-जङ्गमात्मकस्य सर्व-प्राणिजातस्य जीवात्मा। उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सत् उपलभ्यते ¶ [तथाच श्रूयते—"योऽसौ तमो नुदेति सर्वेषां प्राणानादायोदेतीति" ॥ ३ ॥ ४४

* आ० गा० ३प० ६, २, १८।

† "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः। सा देवता"—इति निरु० दै० १, १५।

‡ "शाङ्करभाष्य-प्रणेतृ-कपिलनामर्षि-कृतमित्यर्थः।

¶ "चायनीयं देवाना मुदगम दनीकं स्थानं मित्रस्य वरुणस्याग्नेश्चापूपुरद् द्यावाद्ध-

अथ चतुर्थी।

१२   २र   ३ १ २ ३ २   १ २ ३ २

आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः।

३ १ २   ३ १ २

पितरञ्चप्रयंत्स्वः॥ ४ ॥ ४५*

१ २   १ २   १   २

† उवौ२। ३। हिगौ२। ३। हिगिगि। ३।

---

थिव्यौ चान्तरिक्षञ्च महत्त्वेन तेन सूर्य आत्मा जङ्गमस्य च स्थावरस्य च"—इति निरु० दै० ६, १६। अत्र वेददीपकृद्व्याख्यानन्त्वेवम्—"परापररूपेण स्थितः सूर्योऽत्र स्तूयते। सूर्यः चित्रं आश्चर्यं यथा तथा उदगात् उदयं प्राप्तः उद्गच्छति वा। आश्चर्यत्वम्। उदयन्नेव स्वतेजसा नैशं तमो हन्ति अन्येषां ज्योतींष्याहरत इत्याश्चर्यम्। किम्भूतः सूर्यः? देवानां दीव्यन्ति द्योतन्ते इति देवाः किरणास्तेषामनीकं मुखमाश्रय इत्यर्थः। यद्वानीकं समूहः किरणपुञ्ज इत्यर्थः। तथा मित्रस्य वरुणस्य अग्नेः चक्षुः नेत्रवत् प्रकाशक इत्यर्थः। मित्रादय उपलक्षकाः सर्वस्य सदेवमनुष्यस्य विश्वस्य रूपाणि सूर्योदयेऽभि व्यज्यन्ते अतो मित्रादीनां चक्षुः स सूर्य उद्गतः सन् द्यावा पृथिवी दिवं भूमिं चान्तरिक्षं आप्राः आपूरितवान् आपूरयति वा स्वतेजसेति शेषः। एवमपररूपेण स्तुत्वापररूपेण स्तौति—किम्भूतः सूर्यः? जगतो जङ्गमस्य तस्थुषः स्थावरस्य च जगत आत्मा अन्तर्यामी। य एतमादित्ये पुरुषं वेदयन्ते इन्द्रः स प्रजापतिस्तद्ब्रह्मेति 'श्रुतेः' सूर्याद्वैतमनेनोच्यते इति भावः" (य० मा० भा० स० ७, ४२)॥ "हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। योऽसावादित्ये पुरुषः सोऽसावहम्"—इति वाजसनेय्युपनिषदन्तिमा ऋक्॥ "पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य"—इति निरु० नै० २. ३।

* उ० ६, १, ११, १=ऋ० ८, ९, ४०, १।

† "गन्धर्वाप्सरसा मानन्दप्रतिनन्दौ पक्षौ"—इति षा० ब्रा० ३, २, २९। तयेदं मानन्दनाम साम।

१र र र र र २ र र र र

आयज्ञीःपृश्निरक्रमीदैही। ३। असदन्मातरम्पुराऐही।

२ र र र १ ऽ १ ऽ

३। पितरञ्चप्रयंत्स्वा ऐही। ३। उवी२। ३। हिगी२।

१ १

३। हिगिगि। ३॥ २ * ॥

२ १ २ १ २ १ २र र

† उवी। ३। हिगी। ३। हिगिगी। ३। आयज्ञीः

र र र २ र र रर २

पृश्निरक्रमीदैही। असदन्मातरम्पुराऐही। पितरञ्चप्र

र र र २ १ २ १ २ १

यंत्स्वाऐही। उवी। ३। हिगी। हिगिगी॥ ३ ‡ ॥

२ऽ १ २ २र २र २र र २र र

¶ हाउ३वा। ईन्दूः। भ्राजाम्रोवा। ३। आयज्ञीः

र र र २ऽ १ २ २र २र २र र

पृश्निरक्रमीदैही। हाउ३वा। ईडा। भ्राजाम्रोवा। ३।

२ र र र र २ऽ १ ३ २र २र २र

असदन्मातरम्पुराऐही। हाउ३वा। सात्यैम्। भ्राजाम्रो

---

* आ० गा० ३प० ६, २, २।

† "तत्र प्रतिगन्ध"—इति आ० गा० २, १ २९।

‡ आ० गा० ९प० ६, २, २।

¶ "तिषः सार्पराज्ञः"—इति आ० गा० २, २, २९। तत्र प्रथम मिदम्।

र　　१　　र र र　　२ऽ　　१ र
वा । ३ । पितरञ्चप्रयंत्स्वाऽऐही । द्वाउ३वा । दीयौः ।
॥ ७ * ॥ ४५

आयङ्गौः पृश्निरित्यस्य सार्पराज्ञी समैक्षत ।
ऋचस्तिस्रो भवेदासां विकल्पेनात्मदेवता ॥

"गौः" गमनशीलः † "पृश्निः" प्राष्टवर्णः व्याप्ततेजाः ‡ "अयं" सूर्यः "आक्रमीत्" आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः । आक्रम्य च "पुरः" पुरस्तात् पूर्वस्यां दिशि "मातरं" सर्वस्य भूतजातस्य निर्मात्रीं "भूमिम्" "असदत्" आसीदति प्राप्नोति [ सदेश्छान्दसो लेट् ¶ । लृदित्वात् च्लेरङादेशः §] ततः "पितरं" पालकं द्युलोकम्, ; "च" शब्दादन्तरिक्षं "प्रयन्" प्रकर्षेण शीघ्रं गच्छन् "स्वः" सु अरणः ‖ शोभन-गमनो भवति । यद्वा । पितरं स्वर्लोकं प्रवर्त्तते ॥ ४ ॥ ४५

* आ० आ० ३प० ६, २, ७ ।

† "गौरादित्यो भवति गमयति रसान् गच्छत्यन्तरिक्षेऽथ द्यौर्यत् पृथिव्या अधि-दूरं गता भवति यच्चास्यां ज्योतींषि गच्छन्ति"—इति निरु० नै० २, १४ ।

‡ "पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्पृष्टा रसान् संस्पृष्टा भासं ज्योतिषां संस्पृष्टो भासेति वाथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च"—इति निरु० नै० २, १४ ।

¶ "लिङर्थे लेट्"—इति पा० ३, ४, ७ ।

§ "पुषादिद्युताद्यॢदितः परस्मैपदेषु"—इति पा० ३, १, ५५ ।

‖ "स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान् स्वृतो भासं ज्योतिषां स्वृतो भासेति वैतेन द्यौर्व्याख्याता"—इति निरु० नै० २, १४ ।

अथ पञ्चमी ।

अन्तश्चरति रोचनास्य प्राणादपानती ।
व्यख्यन्महिषो दिवम् ॥ ५ ॥ ४६ *

† औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१ओ । वा२३ । भू२३४वान् । अन्तश्चरतिरोचना । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । जा२३४नात् । अस्यप्राणादपानती । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । वा२३४र्वान् । व्यख्यन्महिषोदिवम् । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । का२३४रात् । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । भू२३४तीः । औहो

* उ० ६, १, ११, २= ऋ० ८, ८, ४७, २ ।

† "मघवतां भूतिः"—इति आ० ब्रा० ३, १, २९ ।

२ र र　१　१२ र र र र　२
औहोवा। होइ। २। औहोऔहोवा। हा३१उ।
१　१ र २र १र २ र र　११ र र र र　१
वा२। अभ्राजोज्योतिरभ्राजीत्। औहोऔहोवा। हो
१र र र र र　२　१　२
इ। २। औहोऔहोवा। हा३१उ। वा२३। ए३।
१र र र र र　२१११११
सर्वान्कामानभीमहौ२३४५॥ ६ * ॥

२ऽ　१ २　३र २र २र र　२
† हाउ३वा। भूतम्। भ्राजाओवा। ३। अन्तस्च
र र　र र　२ऽ　१　२र २र २र
रतिरोचना। ऐही। हाउ३वा। पृथिवी। भ्राजाओ
३र र　२ र र र र र र　२ऽ　१ २
वा। ३। अस्यप्राणादपानता ऐही। हाउ३वा। साह्वः।
३र २र ३र र　२　र र र र　२ऽ
भ्राजाओवा। ३। व्यख्यन्महिषोदिवामैही। हाउ३वा।
१ २
तेजः॥ ८ ‡ ॥ ४६

२ र र १ २　२　१
¶ अन्तर्देवेषू३रोचा१सा२इ। ३। अन्तस्चरती३रो

* आ० गा० २प० ६, २, ६।

† तत्र द्वितीयमिदम्—इति ( आ० ब्रा० ३, २, १९ )

‡ आ० गा० २प० ६, २, ८।

¶ "मित्रावरुणयोरित्याचक्षते" —इति आ० ब्रा० ३, २, १९।

२ २ २२ १२ २
चा१ना२। अस्यप्राणादा३पाना१ता२इ। व्यख्यन्महो३

१ २ २ २२ १ २ २
षोदा१इवा२म्। अन्तर्देवेषू३रोचा१सा२इ। २। अन्त

२२ १ १ ३ ५२ २ १ १२ १२ २
र्देवेषू३रो२३। चा२सा२३४औहोवा। ए३। देवादिवा

२ १११११
ज्योती२३४५ः॥ १८ *॥ ४६

"अस्य" सूर्यस्य "रोचना" † रोचमाना दीप्तिरन्तःशरीर-मध्ये मुख्य-प्राणात्मना "चरति" वर्त्तते। किं कुर्वती? "प्राणादपानती" [मुख्य-प्राणस्य प्राणाद्याः पञ्च वृत्तयः। तत्र प्राणनं नाड़ीभि रूर्ध्वं वायोर्निर्गमनम्] तथाविधात् प्राणात् प्राणना दनन्तरम् अपानती [अपाननं नाड़ीभि रवाङ्मुखं वायोर्नयनम्] तत् कुर्वन्ती [अपपूर्वादनितेर्लटः शतृ, (३, २, १२४) अदादित्वाच्छपो लुक् (२, ४, ७२)। उगितश्चेति (४, १, ६) ङीप्। शतुरनुम इति ‡ नद्या उदात्तत्वम्। यद्वा। "अन्तः" द्यावापृथिव्योर्मध्ये "अस्य" सूर्यस्य "रोचना" रोचमाना दीप्तिः "चरति" गच्छति [रुच दीप्तौ (भ्वा० आ०)। अनुदात्तेतश्च

* आ० गा० ३प० ६, २, १८।

† रोचना इति "रोचते"—इति ज्वलतिकर्मणोरूपमित्यभिप्रायः (निघ० १ १६, ८)।

‡ "शतुरनुमोनद्यजादी"—इति पा० ६, १, १७३।

अथ षष्ठी ।

३　२उ　३ १ २　　३ १　२ ३ १　२
त्रिंᳪशद्धाम विराजति वाक्पतङ्गाय धीयते ।
१ ३ २　३ २ ३ १　२
प्रति वस्तोरह द्युभिः ॥ ६ ॥ ४७ *

२ऽ　　१ २　३र २र ३र र　　२　र
† हाउ३वा । आपः । भ्राजाओवा । ३ । त्रिंᳪशद्धा
र　र र र　　२ऽ　　१ २　३र ३र ३र र
मविराजताऐही । हाउ३वा । ऊर्षा । भ्राजाओवा ।
३र　र　र　र र र　　१　　१ २
३ । वाक्पतङ्गायधीयताऐही । हाउ३वा । दीशः ।

ह्लादेरिति (३,२,१४९) युच्]। किं कुर्वन्ती ? "प्राणात्" प्राणनादुदयादनन्तरम् "अपानती" सायाह्न-समये अस्तङ्गच्छन्ती। ईदृश्या दीप्त्या युक्तः अतएव "महिषो" महान् सूर्यः ‡ "दिवम्" अन्तरिक्षं उदयास्तमयोर्मध्ये "व्यख्यत्" विचष्टे प्रकाशयति [महि रचि महेष्टिषजिति औणादिकष्टिषच् प्रत्ययः। चक्षिङः ख्याञ् (२,४,५४) छान्दसे लुङि ¶ अस्यतिवक्तिख्यातीत्यादिना (२, १, ५२) ल्लेरङादेशः ॥ ५ ॥ ४६

* उ० ६, १, ११, ३= ऋ० ८, ८, ४७, ३ ।

† तद्वैवाक्निम मिदम्—इति आ० ब्रा० ३, २, २९ ।

‡ "महिषः"—इति महन्नामसु अष्टमं नैघण्टुकम् ३, ३। "महान् कस्मान्मानेनान्यान् जहातीति शाकपूणि र्महनीयो भवतीति वा"—इति निरु० नै० ३, १३ ।

¶ "छन्दसि लुङ् लङ् लिटः"—इति पा० ३, ४, ६ ।

३र २र ३र र १ र र र र २ऽ
भ्राजाओवा। ३। प्रतिवस्तोरहव्युभाऐही। हाउवा।
१ २
ज्योतिः॥ ८ *॥ ४७

"त्रिंशद्धाम" धामानि स्थानानि [ वचनव्यत्ययः (३, १, ३८)] "वस्तोः" वासरस्य † अहोरात्रस्यावयवभूतानि। "अह" शब्दोऽवधारणे ‡। "द्युभिः" सूर्यस्य दीप्तिभिरेव ¶ "विराजति" विराजते विशेषेण दीप्यते [ व्यत्ययेनैकवचनम् (३, १, ३८)। मुहूर्त्तान्यत्र धामान्युच्यन्ते। पञ्चदश रात्रेः पञ्चदशाह्नः ] "पतङ्गाय" पतति गच्छतीति पतङ्गः सूर्यः § तस्मै सूर्याय स्तुति-रूपा "वाक्" "प्रतिधीयते" प्रतिमुखं स्तोतृभिर्विधीयते क्रियते। यद्वा "वस्तोः" अह्नः "त्रिंशत्" "धाम" धामानि [ घटिकाभिप्रायमेतत् ] त्रिंशद्घटिकाः [ अत्यन्तसंयोगे द्वितीया (२,३,५)] एतावत् कालं "द्युभिः" दीप्तिभिरसौ सूर्यो "विराजति" विशेषेण दीप्यते। तस्मिंश्च समये "वाक्" त्रयीरूपा तस्मै "पतङ्गाय" "प्रतिधीयते" प्रतिमुखं धार्यते तं पूर्वं

* आ० गा० ३प० ६, २, ९।

† "वस्तोः"—इति अहर्नामसु प्रथमं नैघण्टुकम् (१,९)।

‡ "अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण सम्प्रयुज्येते। अयमहेदं करोतु अयमिदं च करिष्यतीदं न करिष्यतीति"—इति निरु० नै० १, ५।

¶ "द्योतत इति सतः"—इति निरु० नै० १, ६।

§ "पतङ्गः"—इति अश्वनामसु द्वाविंशं नैघण्टुकम् १, १४।

अथ सप्तमी ।

२ ३ २ ३ १ २　३ १ २　३ १ २
अपत्ये तायवोयथानक्षत्रायन्त्यक्तुभिः ।
१ २　३ १ २
सूरायविश्वचक्षसे ॥ ७ ॥ ४८*

अथाष्टमी ।

१ २　३ १ २ २ ३ १ ३ २ ३　१ २
अदृश्रन्नस्यकेतवोविरश्मयोजनाꣳ अनु ।
१ २　३ १ २
भ्राजन्तोअग्नयोयथा ॥ ८ ॥ ४९ †

१र　र　र　३र ३र ३रर　२ र २
‡ हाउहाउहाउ । भ्राजाओवा । ३ । दिदीहिवि

२ १　२　र　१　२　२र
श्वतस्पृथुः । उदुत्यञ्जाता२वाइदा१सा२म् । देवंवह

सेवत इत्यर्थः ॥ [श्रूयते हि—“ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः”—इति । यदा लिङ्ग सूक्ते सार्पराज्ञ्या आत्मस्तुतिस्तदा सूर्यात्मना स्तूयत इत्यवगन्तव्यम् ॥ ६ ॥ ४७

---

* ऋ० १, ४, ७, २ ।　　† ऋ० १, ४, ७, ३ ।

‡ “वडेन्द्राः परिश्रयक्रतूनाम्”—इति शा० श्रौ० ३, ९, २९ । तत्र प्रथम मिदम् ।

१ २ २र र १ २ २
न्तीइकाइता१वा२ः। दृशेविश्वायाइसूरा१या२म्। अ
र र १ २ २ र १ २
पत्येतायाइवोया१था२। नक्षत्रायन्तीयाक्तू१भा२इः।
२र र १ २ २ १ २
सूरायविश्वाइचाचा१सा२इ। अदृश्रन्नस्याइकाइता१वा२ः।
२ र १ २ २र र १ २ ऽ
विरश्मयोजाइना९अा१नू२। भ्राजन्तोअग्नाइयोया१था
२र र २र २र ३र र २र २ ४
२३। हाउहाउ। भ्राजाओवा। २। भ्राजाओ
३ १ १ १ १
३५वा६५६। ई२३४५॥ ११*॥

२र र ३ २र २र र २ र १ २
† हाउहाउ। शुक्राओवा। ३। दिदीहिविश्वतस्पृ
१ २ र १ २ २र
थुः। उदुत्यञ्जाताइवाइदा१सा२म्। देवंवहन्तीइ
१ २ १ र र १ १र २ र
काइता१वा२ः। दृशेविश्वायाइसूरा१या२म्। अपत्ये
र १ २ २ र १ २ २र र
तायाइवोया१था२। नक्षत्रायन्तीयाक्तू१भा२इः। सूरा
१ २ २ १ २
यविश्वाइचाचा१सा२इ। अदृश्रन्नस्याइकाइता१वा२ः।

* आ० गा० ३प० ६, २, ११।
† नमैवेदं द्वितीयम्। (आ० गा० २, २, १९)

२　　र　　१　२　　२र　　र　　१　२
विरश्मयोजाइनाऽ९आ१नू२। भ्राजन्तोअग्ना३योया१था२३।

२र　　र　　३　२र१र　र　　३　१　४
हाउ२हाउ। प्रुक्राओवा। ३। प्रुक्रा३ओ५वा६५६।

३१११११
ई२३४५॥ १२ * ॥ ४८ ॥ ४८

"त्ये" "तायवः" "यथा" प्रसिद्धास्तस्करा इव "नक्षत्राणि" देवगेहरूपाणि ["देवगृहा वै नक्षत्राणि"—इति श्रुत्यन्तरात्। यद्वा, इह लोके मानुषा ये स्वर्गमाप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते। तथाच श्रूयते—"यो वा इह यजते अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्"—इति। यद्वा, तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते। "सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणीति"—आम्नानात्। यास्कस्त्वाह—"नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि नक्षत्राणीति च ब्राह्मणम्"—इति] यथाविधानि नक्षत्राणि "अक्तुभिः" रात्रिभिः सह "अप यन्ति" अपगच्छन्ति। "विश्वचक्षसे" विश्वस्य सर्वस्य प्रकाशकस्य "सूराय" सूर्यस्य आगमनं दृष्ट्वेति शेषः [ तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य आगमिष्यतीत्याकुलायन्त इत्यर्थः। तायुरिति स्तेननाम ( नै ३, २४, ७ ) तायुस्तस्कर इति तन्नामसु पाठात्। अक्तुरिति रात्रिनाम ( नै० १, ७, ४ ) शर्वरी अक्तुरिति तन्नामसु पाठात् ॥ ७ ॥ ४८

---

* आ० गा० ३प० ६, २, १२।

अथ नवमी।

३ १ २ ३ १ २ २ १ २
तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य।
२ ३ १ २ ३ २
विश्वमाभासिरोचनम्॥ ९ ॥ ५०*

अथ दशमी।

१ २ ३ १ २ १ २ ३ १२ २२ ३ १ २
प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान्।
३ १उ ३क २र ३ २
प्रत्यङ्विश्वꣳस्वर्दृशे॥ १० ॥ ५१†

अथ एकादशी।

१ २ ३ १ २ ३ २ ३ १२ १ २
येनापावकचक्षसाभुरण्यन्तञ्जनाꣳअनु।
१ २ ३ १ २
त्वंवरुणपश्यसि॥ ११ ॥ ५२‡

"अस्य" सूर्यस्य "केतवः" प्रज्ञापकाः "रश्मयः" दीप्तयः "जनान् अनुव्यदृश्रन्" जनान् सर्वान् अनुक्रमेण प्रेक्षन्ते। सर्वं जगत् प्रकाशयन्तीत्यर्थः। तत्र दृष्टान्तः—"भ्राजन्तः" दीप्यमाना "अग्नय इव"॥

"व्यदृश्रन्"-"अदृश्रम्"—इति पाठौ॥ ८॥ ४९

* ऋ० १, ४, ७, ४। † ऋ० १, ४, ७, ५।

‡ ऋ० १, ४, ७, ६।

२र　र　　१र २र १रर　　　२ र १　२
* हाउ२हाउ । भूताओवा । ३ । दिदीहिविश्वतस्पृ
१　२　　१ २　　　२र　३ १ २
थुः । तरणिर्विश्वा३दार्श्रा१ता२ः । ज्योतिष्कृदसीसूरा१
२　र र　१ २　　　२　र र
या२ । विश्वमाभासी३रोचा१ना२म् । प्रत्यङ्देवा३
१ २　　　२　र　१ २
नांवा१३शा२ः । प्रत्यङुदेषी३मानू१षा२न् । प्रत्यङ्
१ २　　　१र र र　　१ २
विश्व२स३वार्ह१शा२इ । येनापावका३चाक्षा१सा२ ।
२　　१　२　　२　　१ २
भुरण्यन्तञ्जा३ना२भा१नू२ । त्वंवरुणा३पाश्या१सा२३इ ।
२र　र　　१र २र २र र　　　१र २　४　५
हाउ२हाउ । भूताओवा । २ । भूता३ओ५वाई५इ ।
२ १ १ १ १
ई२३४५ ॥ १२ † ॥
२र　र　　१र२र १र र　　२ र १　२
‡ हाउ२हाउ । तेजाओवा । ३ । दिदीहिविश्वतस्पृ
१　२　　१ २　　　२र　३ १ २
थुः । तरणिर्विश्वा३दार्श्रा१ता२ः । ज्योतिष्कृदसीसूरा
२　र र　१ २　　　२　र ०र
१या२ । विश्वमाभासी३रोचा१ना२म् । प्रत्यङ्देवा३

---

* तत्र तृतीयं गानम् ( आ० ग्रा० १, २, २९ ) ।

† आ० ग्रा० ४प० ६, २, १२ ।

‡ तत्र चतुर्थं गानम् ( आ० ग्रा० १, २, २९ ) ।

मांवा२इ आ २ः। प्रत्यङ्देवो३मानू१षा २न। प्रत्यङ्
विश्व‌ँसू३वाई १आ २इ। येनापावका३चाक्षा१सा २।
भुरण्यन्तञ्जा३ना‌ँआ१नू २। त्वंवरुणा३पाश्या१सा२३इ।
हाउ२हाउ। तेजाओवा। २। तेजा३ओपुवा६५६। ई२
३४५॥ १४*॥ ५०॥ ५१॥ ५२

हे "सूर्य" त्वं "तरणिः" प्रगन्ता अन्येन गन्तु मशक्यस्य महतोऽध्वनो गन्तासि † [ तथाच स्मर्यते—"योजनानां सहस्रे द्वे द्वे शते द्वे च योजने। एकेन निमिषार्द्धेन क्रममाण नमोऽस्तु ते"—इति ] यद्वा। उपासकानां रोगात्तारयितासि ["आरोग्यं भास्करादिच्छेत्"—इति स्मरणात्] तथा "विश्वदर्शतः" विश्वैः सर्वैः प्राणिभिर्दर्शनीयः [ आदित्य-दर्शनस्य चण्डालादि-दर्शन-जनित-पाप-निवर्हण-हेतुत्वात्। तथाचापस्तम्बः-"दर्शने ज्योतिषां दर्शनम्"—इति यद्वा, "विश्वं" सर्वं भूतजातं "दर्शतं" द्रष्टव्यं प्रकाश्यं येन स तथोक्तः ] तथा "ज्योतिष्कृत्" ज्योतिषः प्रका-

* आ० मा० ३प० ६, २. १४।

† "तरणिः"—इति निघण्टौ तु (२, १५) क्षिप्रनामसुपाठ्यं पदं। तरणिर्वोढा ... (४३० पृ०) मिति मन्त्र-व्याख्यायामस्य मेव व्याचख्यौ तारकमिति; माधवस्तु 'क्षिप्रं दातारं वा'—इति।

शस्य कर्त्ता, सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः । यद्वा, चन्द्रादीनां [ रात्रौ हि अस्तमये चन्द्रादिषु सूर्य-किरणाः प्रतिफलिताः अतोऽन्धकारं निवारयन्ति । यथा द्वारस्थ दर्पणोपरि निपतिताः सूर्यरश्मयो गृहान्तर्वर्त्ति तमो निवारयन्ति तद्वदित्यर्थः ] यस्मादेवं तस्मात् "विश्व" प्राप्तं "रोचनं" रोचमानम् "अन्तरिक्षम्" "आ" समन्तात् "भासि" प्रकाशयसि ॥

यद्वा, हे "सूर्य" अन्तर्यामितया सर्वस्य प्रेरक परमात्मन् ! "तरणिः" संसाराब्धेस्तारकोसि । यस्मात् त्वं "विश्वदर्शतः" विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्त्तव्य इत्यर्थः [अधिष्ठान-साक्षात्कारे हि आरोपितं निवर्त्तते ] "ज्योतिष्कृत्" ज्योतिषः सूर्यादेः कर्त्ता [तथाम्नायते—"चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत"—इति* ] ईदृशस्त्वच्चिद्रूपतया "विश्व" सर्वं दृश्यजातं "रोचमानं" दीप्यमानं यथा भवति तथा "आ भासि" प्रकाशयसि [नैवं न्यक्करणे हि सर्वं जगत् दृश्यते ।†

---

* "चन्द्रमामनसोजातश्चक्षोःसूर्योअजायत । श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत"—इति य० मा० शा० स० ३१अ० १२क० । 'यथा दध्यादि-द्रव्याणि, गवादयः पशवः, ऋगादयो वेदाः, ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्नाइत्याह । मनसः सकाशात् चन्द्रमाः जातः चक्षोः चक्षुषः सकाशात् सूर्यः अजायत । वायुः प्राणश्च श्रोत्रात् कर्णादजायत । मुखादग्निरजायत' —इति च तद्व्याख्यानं महीधर-कृतम् ।

† "हे सूर्य ! त्वं ज्योतिष्कृत् तेजसः कर्त्तासि विश्वं माभासि प्रकाशयसि च अग्निषु प्रचण्डचन्द्रमधतारकादिषु मदीयं तेजइत्यर्थः । कीदृशं विश्वम् ? रोचनं दीप्यमानं

तथाचाम्नायते—"तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"—इति * ॥ ८ ॥ ५०

हे सूर्य! त्वं "देवानां" "विशः" मरुत्नामकान् देवान् † ["मरुतो वै देवानां विशः"—इति श्रुत्यन्तरात्। तान्मरुत्सञ्ज्ञकान्देवान्] "प्रत्यङ् उदेषि" प्रतिगच्छन्नुदयं प्राप्नोषि ‡। तेषा मभिमुखं यथा भवति तथेत्यर्थः। तथा "मानुषान्" मनुष्यान् प्रत्यङ् उदेषि। तेऽपि यथास्मदभिमुख एव सूर्य उदेतीति मन्यन्ते तथा "विश्वं" प्राप्तं "स्वः" द्यां लोकं "दृशे" द्रष्टुं "प्रत्यङ्" उदेषि। यथा स्वर्लोक-वासिनो जनाः स्वस्याभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः [एतदुक्तं भवति—ये लोकाः

---

त्वत् प्रकाशेनेति भावः। कीदृशस्त्वं तरणिः तरत्यतिक्रामति नभोवर्त्मेति तरणिः। 'अर्त्तिविश्रुभ्योऽनिरिति (उणा० २, ९८) तरतेरनिप्रत्ययः। विश्वदर्शतः विश्वस्य दर्शतः दर्शनीयः इत्येतत् ॥"—इति वेददीपः।

* हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्त मनुभाति सर्वं तस्य भासा सर्व मिदं विभाति"—इति मुण्डकोपनिषत् २, १०।

† "विशः"—इति, वायुरदितिरिति व्याख्यायां (१५० पृ०) प्रजाः। विश्वोविश इति व्याख्यायां (२४४ पृ०) प्रजाः। यद्वाऽ इति व्याख्यायां प्रजाः, तन्नैव विश्वे स्थ इति च। प्रवोमहे इति व्याख्यायां (९९७पृ०) प्रजाः। निघण्टु-द्वितीय-तृतीये मनुष्यनामस्तु चतुर्थञ्च।

‡ "प्रत्यङ्ङिदं सर्व मुदेषि। प्रत्यङ्ङिदं सर्वं मभि विपश्यसीति"—इति निरु० दै० ६, २४।

पश्यन्ति ते जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति * ।
तथाचाम्नायते—"तस्मात्सर्व एव मन्यन्ते मां प्रत्युदगात्"—
इति ॥ १० ॥ ५१

हे "पावक" सर्वस्य शोधक ! "वरुण" अनिष्ट-वारक सूर्य !
त्वं "जनान्" प्राणिनः "भुरण्यन्तं" धारयन्तं पोषयन्तं वा इमं
लोकं † "येन" ‡ "चक्षसा" प्रकाशेनानु पश्यसि अनुक्रमेण
प्रकाशयसि तं प्रकाशं स्तुम इति शेषः । यद्वा, उत्तरस्या ऋचि
सम्बन्धः तेन चक्षुसा उदेषीति ¶ । तथाच यास्केनोक्तं §—
तत्ते वयं स्तुम इति वाक्यशेषोऽपिवोत्तरस्या मन्वयस्तेन व्याख्या-
तीति ( निरु० दै० ६, २२ )" ॥ ११ ॥ ५२

---

* "अपि वैतस्या मेव । येनापावक . . . । तेन नो जनानभि वि पश्यसि"—
इति निरु० ६, २५-२६ ।

† "भुरण्युमिति क्षिप्रनाम भुरण्युः शकुनिर्भूरि मध्वानं नयति स्वर्गस्य लोक-
स्यापि वोढा तत्सम्पाती भुरण्युरनेन पावकख्यानेन भुरण्यन्त जनाँ अनु त्वं वरुण पश्यसि"
—इति निरु० दै० ५, २२ ।

‡ ऋचि तु "येना"—इति पाठः । तत्र द्व्यच इति ( ६, ३, १३५ ) दीर्घः ।

¶ "सर्वमेवं पश्याकारेणाग्निर्मीयते तद्रूपमात्मानं सम्पाद्य मुक्तिमाप्नोति तदत्र
प्रार्थ्यते—हे पावक शोधक येन चक्षसा दर्शनेन त्वं भुरण्यन्तमनुपश्यसि ; क्षिप्रपाती
पक्षी भुरण्युः, भुरण्युमात्मानं करोति भुरण्यति, भुरण्यतीति भुरण्यन् तम् ; क्विबन्तात्
शतृप्रत्ययः । सर्वमेवं यथाजिनं भुरण्युपक्षिरूपात्मानं कृत्वा स्वर्गं यान्तं येन चक्षसानु-
पश्यसीत्यर्थः । तेन चक्षसा जनानस्मानपि भुरण्यतः हे वरुण त्वं पश्य वरुणः सूर्यः"—
इति वेददीपः य० मा० सं० अ० २२ क० २१ क० ।

§ "अपि वोत्तरस्यामित्यन्तमेव वाक्यवचनम् । अन्वयेत्यादिरर्थसम्बन्धः ।"

अथ द्वादशी।

१२ २र३१२ ३ २ ३ १ २ ३ १ २
उद्द्यामेषिरजःपृथ्वहा*मिमानोअक्तुभिः।
१ ३ १ २
पश्यञ्जन्मानिसूर्य्य॥ १२॥ ५३†

अथ त्रयोदशी।

१ २ ३ १ २ २ ३ १ ३ १ २ ३कर२
अयुक्तसप्तशुन्ध्युवःसूरोरथस्यनप्त्रः‡।
१ २ ३ १ २
ताभिर्यातिस्वयुक्तिभिः॥ १३॥ ५४¶

अथ चतुर्दशी।

३ १ २ ३ २ ३ १ ३ १ २
सप्तत्वाहरितोरथेवहन्तिदेवसूर्य्य।
३ १ २
शोचिष्केशंविचक्षण॥ १४॥ ५५§

॥ पञ्चम-दशति॥

---

* "रजसृथवा"—इति च ऋ० पाठः। † ऋ० १, ४, ७, ७।
‡ "नप्त्र्यः"—इति ऋ० पाठ। ¶ ऋ० १, ४, ७, ९।
§ ऋ० १, ४, ७, ८।

१र   र   ३ २र३र र   २ र १
* हाउ२हाउ। सत्याओवा।३। दिदीहिविश्वत

२ १   २ र र   १ २   २ र र ७र
स्पृथुः। उद्यामेषिराइजाःपा१र्थू२। अद्यामिमानो३

१ १   २ र १ १   २
आक्तू भा२इः। पश्यञ्जन्मानी३सूरा१या२। अयुक्त

१ २   र र   १ २   २र
सप्ता३शून्ध्यू१वा२ः। सूरोरथस्या३नाप्त्रा१या२ः। ता

र   १ २   २ र   १ १
भिर्यातिस्वा३यूक्ता१इभी२ः। सप्तत्वाहरी३तोरा१था२

२ र   १ १   २र र   १ २
इ। वहन्तिदेवा३सूरा१या२। शोचिष्केशंवी३चाचा१णा

२र र   ३ २र३र र   ३ २ ४
२३। हाउ३हाउ। सत्याओवा।३। सत्या३ओ५वा६५

७१ १ १ १
६। ई२३४५॥ १५†॥

१र   र   ३ २र३र र   २ र १   २
‡ हाउ२हाउ। ऋताओवा।३। दिंदीहिविश्वतस्पृ

१   १ र र   १ १   २ र   र ७र १ २
थुः। उद्यामेषिराइजाःपा१र्थ२। अद्यामिमानो३आक्तू

२ र   १ २   २
१भा२इः। पश्यञ्जन्मानी३सूरा१या२। अयुक्तसप्ता३

* तत्र पञ्चम मिदम् ( आ० ग्रा० २, २, २९ )।

† आ० ग्रा० ३प० ६, २, १५।

‡ तत्रान्तिमं षष्ठ मिदम् ( आ० ग्रा० २, २, २९ )।

१ २ २ र १ २ २र र
मून्ध्यू१वा२ः। सूरोरथस्या३नाम्ना१या२ः। ताभिर्याति
१ २ २ र १ २ २
स्वा३यू क्ता१इभी२ः। सप्तत्वाहरी३तोरा१था२इ। वह
र १ २ २र र १ २ २र
न्तिदेवा३सूरा१या२। शोचिष्के शंबी३चा त्ता१णा२३। हाउ
र र २ २र२र र २ २ ४ २ १
वाउवाउ। ऋताओवा। ३। ऋता३ओ१वा६५६। ई२
१ ११
३४५॥ १६ * ॥ ५३॥ ५४॥ ५५

हे "सूर्य !" त्वं "पृथु" सुविस्तीर्णं "रजः" लोकं ["लोका रजांस्युच्यन्ते" †—इति यास्क-वचनात्] द्युलोकं "द्याम्" अन्तरिक्षलोकम् "उदेषि" उद्गच्छसि ‡। किं कुर्वन्? अहानि "अक्तुभिः" रात्रिभिः सह "मिमानः" उत्पादयन् [आदित्यगत्य-धीनत्वादहोरात्र-विभागस्य] तथा "जन्मानि" जननवन्ति भूतजातानि "पश्यन्" प्रकाशयन्॥

"उद्याम्"-"विद्याम्"—इति पाठौ॥ १२॥ ५३

* आ० गा० २प० ६, २, १६।

† "रजो रजतेः। ज्योती रज उच्यते। उदकं रज उच्यते। लोका रजांस्युच्यन्ते असृगहनी रजसी उच्येते। रजांसि चित्रा विचरन्ति तन्यव इत्यपि निगमो भवति"—इति निरु० ४, १९।

‡ "एषि द्यां रजश्च पृथु महान्तं लोकमहानि च मिमानोऽक्तुभीरात्रिभिः सह पश्यञ्जन्मानि जातानि सूर्य। अपि वा पर्वसाम्"—इति यास्कः दै० ६,२१।

"सूरः" सर्वस्य प्रेरकः सूर्यः* "शुन्ध्युवः" शोधिका अश्व-स्त्रियः †। तादृशीः "सप्त" सप्त-सङ्ख्याकाः ‡ "अयुक्त" स्व-रथे योजितवान् ¶। कीदृशीः? "रथस्य" "नप्त्यः" नपातयित्र्यः। याभिर्युक्तो रथो याति न पतति इदृशीरित्यर्थः। एवम्भूताभिस्ताभिरश्वस्त्रीभिः "स्वयुक्तिभिः" स्वकीय-योजनेन रथे सम्बद्धाभिः "याति" यज्ञगृहं प्रत्यागच्छति। अतस्तस्मै हविर्दातव्य मिति वाक्यशेषः॥ १३॥ ५४

हे "सूर्य!" "देव" द्योतमान! "विचक्षण!" सर्वस्य प्रका-

* सूरशब्दः सूर्यार्थोऽत्र सर्वत्र—ऋ० १, २, ४, ३—२, १, ४, ४—५, २, २, ७—उ० ४, १, ८, १ — ४, २, १, १२—५, १, ८, २—५, १, ८, ३—६, १, २, १—६, १, ४, २—९, १, ४, १। सोमार्थस्थानयोरेव—उ० ३, १, ५, ९—४, १, २०. २॥

† "शुन्ध्युवः शुन्ध्युरादित्यो भवति शोधनात् तस्यैव। * * *। *० शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवति। आपोऽपि शुन्ध्युव उच्यन्ते शोधनादेव" —इति निरु० नै० ४, १६।

‡ "सप्त सप्ता सङ्ख्या सप्तादित्यरश्मय इति वदन्ति"—इति निरु० नै० ४, २६। "सप्त युञ्जन्ति रथमेकचक्रमित्यादि निरु० नै० ४, २७। "सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः। सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त"—इति मु० उ० २,१।

¶ "रथे तिष्ठन्नयति वाजिनः पुरस्तात् यतो यत्र यत्र कामयते सुषारथिः। कथ्याय-सारथि रभीशूनां महिमानं पूजयामि मनः पश्चात् सन्तोऽनुयच्छन्ति रश्मयः"—इति निरु० दै० ३, १६। अपिच—"रथं क्षिप्रं मारुतं मेघं वयं अवलीय माकयामह वा यस्मिन्नस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी"—इति निरु० दै० ५, ५०।

श्रयितः। "सप्त" सप्त-सङ्ख्याकाः "हरितः" अश्वाः* रस-हरण-शीला रश्मयो वा† "त्वा" त्वां "वहन्ति" प्राप्नुवन्ति। कीदृशम्? "रथे" अवस्थित मिति शेषः। तथा "शोचिष्केशं" शोचींषि‡ तेजांस्येव यस्मिन् केशा इव¶ दृश्यन्ते स तथोक्तस्त मिति §॥

॥ १४ ॥ ५५

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने षष्ठोऽध्यायस्य पञ्चमः खण्डः॥

---

* "हरित आदित्यस्य"—इति अश्वविशेषनामसु निघ० १, १५, २। "अश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा। * * *। तस्मान्नवत् देवतावच्च निगमा भवन्ति"—इत्यादि निघ० नै० २, २०; दै० ४, ३०-३१।

† "सप्त ऋषयः"—इति रश्मिनामसु निघ० १, ५, १३। अत्र च यास्कः "रश्मिर्यमनात्"—इत्यादि निरु० नै० २, १५।

‡ "शोचिः"—इति ज्वलन्नामधेयेषु षष्ठं नैघण्टुकम् १, १७।

¶ "केशी केशा रश्मयस्तैस्तद्वान् भवति काशनाद्वा प्रकाशनाद्वा। तस्यैषा भवति * * *। केशीदं सर्वं मिद मभि विपश्यति केशीदं ज्योतिरुच्यत इत्यादित्य माह। अथाप्येते इतरे ज्योतिषी केशिनी उच्येते धूमेनाग्नी रजसा च मध्यमः। * * *। एक एषा मित्यग्निः पृथिवीं दहति। सर्वं मेकोऽभि विपश्यति कर्मभि रादित्यो गति-रेकस्य दृश्यते न रूपं मध्यमस्य"—इति निरु० दै० ६, २५-२६-२७।

§ "सप्त तानादित्य रश्मीनयमादित्यो गिरति मध्यस्थानोर्ध्वं शब्दो यत एतस्मिंस्तिष्ठति तानि धीतिभिश्च मनसा च विपर्ययन्ति परि भुवः परिभवन्ति सर्वाणि कर्माणि वर्ष-कर्मणेत्यधिदैवतम्। अथाध्यात्मं सप्त मानीन्द्रियाण्ययमात्मा गिरति मध्यस्थानोर्ध्वं शब्दो यान्यस्मिंस्तिष्ठति तानि धीतिभिश्च मनसा च विपर्ययन्ति परि भुवः परिभवन्ति सर्वा-णीन्द्रियाणि ज्ञानकर्मणेत्यात्मगतिमाचष्टे"—इति निघ० प० २, ११।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ६ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिक-मार्ग-प्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
छन्दोव्याख्याने आरण्यएवाध्येतव्यः
षष्ठोऽध्यायः समाप्तः ॥

॥ समाप्तम् आरण्यम् पर्व आरण्यकाण्डं वा ॥

॥ इति चतुर्थम्पर्व ॥

॥ सामवेद-संहितायां छन्दआर्चिकः समाप्तः ॥

॥ ओं नमः सामवेदाय ॥

# ॥ सामवेदसंहिता ॥

तत्र

## ॥ अथ महानाम्न्यार्च्चिकः ॥ *



( भाष्यकृतोभूमिका )

ऐन्द्रीरथ महानाम्नीः शक्करीर्वा विकर्षिताः ।
पञ्चभिः सहिता मन्त्रे पुरीषपदनामभिः ॥
एताः प्रकृतितस्तिस्र उपसर्गैस्तु संयुताः ।
नव सङ्ख्या इति प्राहुर्वेदाध्ययनशालिनः ॥
ऐतरेय-ब्राह्मणेऽपि शस्त्रे षोडशि-नामके ।
तिस्रः प्रोक्ता महानाम्न्यस्त्रैलोक्यात्मत्ववर्णनात् ॥

---

* महानाम्नीनां पाठस्तु न तु छन्दआर्च्चिके नापि उत्तरार्च्चिके परं छन्दआर्च्चिके समाप्ते तत्पुस्तकान्त्यभागे एव सर्वत्र दृश्यते, एवं आरण्यगाने समाप्ते च ततोऽनन्तरं महानाम्नी-सामपाठस्सर्वेषु पुस्तके सर्वत्रेति परिशिष्टत्व मासां मन्यते च ज्ञायते इति छन्दआर्च्चिकान्ते एव व्याख्यातवान् भगवान् सायणः ।

तत्र हि महानाम्नीना मुपसर्गानुपसृजत्ययं वै लोकः प्रथमा महानाम्न्यान्तरिक्षलोको द्वितीयाऽसौ लोकस्तृतीयेति। नन्वेताः शक्वरीच्छन्दस्का व्याक्रियन्त इत्युक्ताश्चेत् षट्पञ्चाशदक्षराः स्युः। तथा च समाम्नातं चतुर्विंशत्यादि चतुरुत्तरमिति (पि०)। अस्यार्थः—गायत्र्यादीना मतिछृत्यन्तानां छन्दसां चतुर्विंशत्यक्षरा ण्यारभ्य उत्तरोत्तरं चतुर्षु चतुर्षु अक्षरेष्वधिकेषु सत्सु उष्णिगादि-च्छन्दांसि जायन्ते*। एवं क्रमशोऽक्षराधिक्ये सति शक्वरी षट्पञ्चाशदक्षरा सम्भवतीति। एता ऋचस्तु शक्वरीभ्योऽधिकाक्षरा दृश्यन्ते। तस्मादासा मुपसर्गाक्षरैराधिक्यं न तु स्वत इति ज्ञायते। तर्हि के पुनरुपसर्गाः? के पुनः शाक्वराः पादाः? इत्युच्यते—

---

* छन्दांसि — अतिच्छन्दांसि — विच्छन्दांसि

| छन्दोनाम | अक्षरसंख्या | छन्दोनाम | अक्षरसंख्या | छन्दोनाम | अक्षरसंख्या |
|---|---|---|---|---|---|
| १ गायत्री | २४ | १ अतिजगती | ५२ | १ कृतिः | ८० |
| २ उष्णिक् | २८ | २ शक्वरी | ५६ | २ प्रकृतिः | ८४ |
| ३ अनुष्टुप् | ३२ | ३ अतिशक्वरी | ६० | ३ आकृतिः | ८८ |
| ४ बृहती | ३६ | ४ अष्टिः | ६४ | ४ विकृतिः | ९२ |
| ५ पङ्क्तिः | ४० | ५ अत्यष्टिः | ६८ | ५ संस्कृतिः | ९६ |
| ६ त्रिष्टुप् | ४४ | ६ धृतिः | ७२ | ६ अतिकृतिः | १०० |
| ७ जगती | ४८ | ७ अतिधृतिः | ७८ | ७ उत्कृतिः | १०४ |

प्रथमा। "विदामघवन्विदा"--इति द्विपदा ऋगुपसर्गः। ततः "गिघाभ्रचीनाम्मते"—इत्याद्यास्त्रयोऽष्टाक्षराः ग्राक्षराः। ततः "स्वर्णाग्नः"—इति पञ्चाक्षरः पादः। अत्राक्षर-विश्लेषेण पञ्चाक्षरत्वं द्रष्टव्यम्। "प्रचेतनप्रचेतयः"—इत्यष्टाक्षरः। एतौ द्वावुपसर्गसञ्ज्ञौ। "इन्द्रद्युम्नायनइषे"—इति पादोष्टाक्षरः ग्राक्षरः। "एवाहिशक्रः"—इति पञ्चाक्षर उपसर्गः। "रायेवा-जायवज्रिवः"—इत्याद्यास्त्रयः पादाः ग्राक्षराः। "भायाहिपि-बमत्स्व"—इति पादोऽष्टाक्षर उपसर्गः। इत्येव मृक् प्रथमा॥

अथ द्वितीया। "विदारायेसुवीर्यम्"—इति द्विपदा उपसर्गः। "मण्ँहिष्ठवज्रिन्नृञ्जसे"—इत्याद्यास्त्रयोऽष्टाक्षराः पादाः ग्राक्षराः। ततः "अंशुनंशोचिः"—इति पञ्चाक्षरः पादः। "चिकित्वोऽभिनोनय"—इति पादः। एतौ द्वावुपसर्गौ। "इन्द्रोविदे-तमुस्तुहि"—इति पादोऽष्टाक्षरः ग्राक्षरः। "इशेहिशक्रः"—इति पञ्चाक्षरः पाद उपसर्गः। "तमूतयेहवामहे"—इत्याद्यास्त्रयो-ऽष्टाक्षराः पादाः ग्राक्षराः। "क्रतुम्छन्दऋतम्बृहत्"—इति पाद उपसर्गः। इत्येवं द्वितीया॥

तृतीयस्याः। "इन्द्रन्धनस्यसातयेहवामहे"—इति द्विपदा उपसर्गः। "सनःस्वर्षत्"—इत्याद्यास्त्रयोऽष्टाक्षराः ग्राक्षराः पादाः। "अंशुमंदाय"—इति पञ्चाक्षरः पादः। "सुम्नआधेहि

नीवसो"—इत्यष्टाक्षरः पादः । एतौ द्वावुपसर्गौ । "पूर्तिः-प्रविष्ठमस्यते"—इति पादोऽष्टाक्षरः प्राकरः । "वषोहिशक्र:" —इति पञ्चाक्षर उपसर्गः । "नूनन्तनव्यंसन्यसे"—इत्याद्यास्त्रयोऽष्टाक्षराः प्राकराः । "शूरोयोगोषुगच्छति"—इति पादौ द्वावुपसर्गाविति तृतीया ऋक् सम्पन्ना ॥

अत्र प्रथमायाः सप्त प्राकराणि पदानि, पञ्चोपसर्गाः । एवं द्वितीयस्या अपि पदान्युपसर्गाः । तृतीयायास्तु सप्त प्राकराणि पदानि, षडुपसर्गाः । इत्युक्तार्थो निदानकल्पे सूत्रादिकं सम्यगालोचयद्भिः पूर्वाचार्यैः श्लोकद्वये सङ्गृह्य दर्शितः—

"प्रथमं द्विपदा, त्रीणि प्राकराणि पदान्यतः ।
पञ्चार्णाष्टाक्षरौ चोपसर्गावेकश्च प्राकरः ॥ १ ॥
पञ्चार्ण उपसर्गोऽथ त्रयस्ते वहिरन्तिमः ।]
इय माद्या ; द्वितीयैवं ; तृतीया पुनरन्तिमः ।
अधिकोऽष्टाक्षरः पाद उपसर्ग इति स्थितिः॥२॥"—इति ॥

अत्र सर्वत्रोपसर्गान् परित्यज्य केवल-पदगताक्षर-सङ्ख्यायां कृतायां षडधिकपञ्चाशत्-सङ्ख्याकान्यक्षराणि जायन्ते । अतस्तद् द्वितीया प्रकरीति न विरोधः ॥ एतासु गीयते साम यत्तच्छाक्कर मुच्यते । तत्पञ्चमेऽह्नि पृष्ठेषु होतुःपृष्ठं विधीयते ।

उपसर्गैः संयुताना मासा मिन्द्रोऽधिदेवता ।
माध्यन्दिनं यत् सवनं सर्व मैन्द्र मिति स्थितम् ॥

अनेनैवाश्वलायनेन स्व-ब्राह्मण मनुसरता कश्चिद्विशेषोऽनुष्टुब् गायत्री सम्पादनादिर्दर्शित:—

"प्रचेतनप्रचेतयायाहिपिबमत्स्व ।

क्रतुश्छन्दऋतम्बृहत्सुम्नआधेहिनोवसः ॥"—इति । *

"चिकित्वोअभिनोनयमूरोयोगोषुगच्छति ।

सखासुशेवोअद्वयुः ॥"—इति । †

गायत्र्यादिरित्येव मादिः एष तु प्रयोग-सौकर्यार्थः । अस्माभिस्त्विदानी मर्थ-सौकर्यार्थं क्रमेण सोपसर्गा ऋचो व्याख्याताः । ‡

---

* एषानुष्टुप् सम्पन्ना, षडक्षर-चतुष्पदात्मकस्य सम्पादनात् ।

† एषा गायत्री सम्पन्ना, षडक्षर-त्रिपदात्मकस्य सम्पादनात् ।

‡ मन्त्रकारादयोऽपि पठनीयं व्याख्येयं वा प्रथमं स्व-मनसैव सम्पादयन्ते, ततश्च तेऽन्यादिभिः काङ्क्ष्यन्तेऽतोऽत्र 'व्याख्याताः'—इति भूतप्रयोगो नासाधुः, "कौमुदीयं विरच्यते"—इत्यादावप्येवमेव ।

॥ हरिः ओम् ॥

( प्रथमास्तिस्रः )

२ १　२　३ २ ३ १र　२र　३ १ २
विदामघवन्विदागातुमनुशꣳसिषो दिशः ।
१ २　३ १　२
शिक्षाशचीनाम्पतेपूर्वीणाम्पुरूवसो ॥ १ ॥
३　२उ　३ १ २ ३ १　२
आभिष्टमभिष्टिभिःस्वा३र्नाꣳशुः ।
१ २　३ १ २ ३ १　० ३ १ २　३ २
प्रचेतनप्रचेतयेन्द्रद्युम्नायनइषे ॥ २ ॥
३ २उ　३ २　३ १र　२र
एवाहिशक्रोरायेवाजायवज्रिवः ।
१ २　३ २ ३ १　२
शविष्ठवज्रिन्नृञ्जसेमꣳहिष्ठ
३　२ ३　१ २　३　२ ३ १ २
वज्रिन्नृञ्जसआयाहिपिबमत्स्व ॥ ३ ॥ १

१　२ १र　२　१　१र १
* ए२ । विदामघवन्विदाः । गातुमनुशꣳसिषः ।
१　२　२　५　१र　१ र २ र र
दाइशा३१उवा२३ । ई३४डा । ए२ । शिक्षाशचीनाम्
१　१रर १र　१ २　२　५　२र
ताइ । पूर्वीणाम्पूरू२ । वसा३१उवा२३ । ई३४डा । आ

* महानाम्नी साम ( आ० आ० २,२,१९ ) ।

१ १ २ २ ५ १ र
भिष्ठमभा२इ। ष्टिभिरा३१उवा२३। ई३४डा। स्वर्ना७

२ २ ५ १ १र र
भूर:। धा३२उवा२३। ई३४डा। प्राचे। तनप्रचेतया।

१ २ २ १र १ १ १ २ २ १र
इन्द्रा। द्युम्नायना२इषाइ। इडा। ईन्द्रा। द्युम्नाय

१ १ १ २ २ १र १
ना२इषाइ। अथा। इन्द्रा। द्युम्नायना२इषाइ।

१ १रर र र र र र २ २ १ २ १
इडा। एवाहिशक्रोरायेराजायवा१ज्री३वाः। शविष्ठ

२ ४ ५ १ १ १ १
वज्रिन्ना३। जासाइ। म७हिष्ठवज्रिन्ना२३धो। जासा३२

१ १११११ १ १ २ १
उवा२३। इट्इडा२३४५। आया। हिपिबमा२

१ १ ११११
त्सुवा। इडा२३४५॥—

तत्र तावहस्तु, प्रथमं द्विपदा माह—"विदामघन्विदागा-तुमनुशं७सिषोदिश:"—इति। हे "मघवन्" मघं धनं [मंहते-र्दानकर्मण: *] धनवन्निन्द्र! "विदा:" त्वं विद्धि, अत्र वेदितव्य-कर्म-विशेषस्यानुपादानात् सर्वं जानीहीत्यर्थः [विदेः पञ्चम-

---

* "मंहते"—इति दानकर्मसु पठितम् नैघण्टुकम् ३, २०।

लकारे रूपम् * ] यतस्त्वं सर्वज्ञः तस्मात् "गातुं" यजमानगन्तव्यं देशं † "विदाः" जानीहि । यद्वा, गातुर्गायतेः स्तुतिकर्मणः ‡ त्वदर्थं क्रियमाणां स्तोतुः स्तुतिं विद्धि । ततो "दिशः" यजमानस्य साधुमार्गेण स्वर्गं गन्तुं मार्गान् "अनु शश्ंसिषः" अनुशंसोऽपदिशं बोधयेति यावत् [ शंसतेः पञ्चम-लकारे ( पा० ३, ४, ७, ) रूपम् । अडागमः ¶ ]—अथ मुपसर्गभागः ॥

अथ माकरभाग माह—"शिचाशचीनाम्पतेपूर्वीणाम्पुरूवसो । आभिष्टमभिष्टिभिः"—इति । हे "शचीनाम्पते" शचीशब्देन कर्म प्रज्ञा वा § "पूर्वीणां" बह्वीनां ‖ शचीनां पते स्वामिन् ! हे "पुरूवसो" पुरु प्रभूतं वसु धनं यस्य तस्य सम्बोधनं हे प्रभूतधनेन्द्र ! "आभिः" इदानीं क्रियमाणाभिः "अभिष्टिभिः" अभ्येषणाभिः प्रार्थनाभिः स्तुतिभि रस्मदीयाभि

* लेटीत्यर्थः ( पा०३,४, ७ ) ।

† "गातुः"—इति पृथिवी-नामसु विंशं नैघण्टुकम् १,१ । "गातुं यज्ञाय गातुं यज्ञपतय इत्यपि निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये"—इति निरु० नै० ४, २ ।

‡ "गायति"—इति स्तुति-कर्मसु द्वितीयं नैघण्टुकम् ३, १४ ।

¶ "लेटोऽडाटौ"—इति पा० ३, ४, ९४ ।

§ "शची"—इति कर्मनामसु द्वाचत्वारिंशत्तमं नैघण्टुकम् ( २,१) ; प्रज्ञानामसु तृतीयम् ( ३, ९ ) ।

‖ "पुरु"—इति बहुनामसु तृतीयं नैघण्टुकम् ३, १ ।

र्हतुभिः "शिच" * [ शिचतिर्दानकर्मा ( निघ० ३, २०, ८ ) ] देहि वसूनीति ] शेषः। पुरुवसो-इति सम्बोधन-सामर्थ्याद्वसू-नीति लभ्यते॥

अथोपसर्गभाग माह—"स्वर्णांशः। प्रचेतनप्रचेतय"—इति। स्वः, न, अंशुः इति पदत्रयम्। स्वरादित्यः, † नकार उपमार्थीयः ‡। स्वः, इव [ अंशुः अश्नोतेर्व्याप्तिकर्मणः ( निघ० २,१८,१० ) ] व्याप्तो भवतीन्द्रः। हे "प्रचेतन" प्रकृष्टा चेतना बुद्धिर्यस्यासौ तस्य सम्बोधनं हे प्रशस्तज्ञानेन्द्र ! "प्रचेतय" अस्मदीयां भक्ति मवधारय जानीहि॥

अथोभयभाग माह—"द्युम्नायनइषएवाहिशक्रः"—इति। हे इन्द्र ! "नः" अस्मभ्यं "द्युम्नाय" [ "द्युम्नं द्योततेर्यशोवान्नं वा" —इति यास्कः ( नै० ५,५ ) ] यशसे यद्वा, द्युम्नाय [ धननामैतत् ( निघ० २,१०,१२) धनलाभाय ] "इषे" अन्नलाभाय च भव [ आख्याताध्याहारः। हि शब्दः कारण-परः ] "हि" यस्मात् त्वं "शक्रः" धन-दाने समर्थ एव भवसि। तस्माद्धनादिकं प्रयच्छ॥

---

* मन्त्रे तु "शिक्षा"—इति दीर्घान्तः पाठः "द्व्यचोऽतस्तिङः (पा० ६, ३, १३५) —इति दीर्घः।

† स्वरादित्यो भवति"—इत्यादि निरु० नै० २, १४।

‡ "नेति प्रतिषेधार्थीयो भाषाया मुभय मन्वध्यायं नेन्द्रं देव ममंसतेति प्रतिषे-

( द्वितीया स्तिस्रः )

२ २ २२२ २ २ २२ १ २२ २२२२ १२
विदारायेसुवीर्य्यम्भवोवाजानाम्पतिर्वंशाँ२ अनु ।
१ २ २२ २१र १र२ १२
मँहिष्ठवज्रिन्नृञ्जसेयःशविष्ठःशूराणाम् ॥ ४ ॥

अथ शाक्वरभाग माह—"रायेवाजायवज्रिवः । शविष्ठवज्रिन्नृञ्जसेमँहिष्ठवज्रिन्नृञ्जसे"—इति । हे "वज्रिवः" वज्रवन्निन्द्र ! एकोमत्वर्थीयोऽनुवादः । यद्वा, वज्रः व्रजनं गमनं तद्वान्वज्री । अथवा वज्रायुधं तद्वन्निन्द्र ! "राये" धनलाभाय "वाजाय" अन्नलाभाय च प्रसन्नो भवेति शेषः । हे "शविष्ठ" अतिशयेन बलवन् ! हे "वज्रिन्" इन्द्र ! "ऋञ्जसे" [ऋञ्जतिः प्रसाधनकर्मा । ( निघ० ३, ५, ८ ) ] अस्माभिर्धनलाभार्थं प्रसाध्यसे । यद्वा, [ऋञ्जतेः पञ्चमे लकारे (पा० ३, ४, ७) रूपम् ] प्रसाधय अस्मान्धनादिभिः समृद्धान् कुर्वित्यर्थः । हे "मंहिष्ठ" [ मंहतेर्दानकर्मणः ] अतिशयेन दानशील पूज्य ! वा हे "वज्रिन्" "ऋञ्जसे" अस्माभिः प्रसाध्यसे ॥

अथापरभाग माह—"आयाहिपिबमत्स्व"—इति । यस्मादेवं तस्मात् "आयाहि" अस्मदीयं यज्ञं प्रत्यागच्छ । आगत्य च पिब । तं सोमं पीत्वा "मत्स्व" हृष्टो भवेति ॥ ( १-२-३ ) ॥

---

चार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति । दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते"—इति निरु० नै० १, ४ ।

१र १र २ १ २ २ २उ २ २
योमꣳहिष्ठोमघोनामꣳशुर्न्नशोचिः।
१ २ २ १ २ २१ २ २र २र
चिकित्वोअभिनोनयेन्द्रोविदेतुमुस्तहि ॥ ५ ॥
१ २ २ २ २उ ३ १ २ २ १ २२१२
ईशेहिशक्रस्तमूतयेहवामहेजेतारमपराजितम्।
१ २ ३ २ ३ २ ३ २ ३ २ २ २ ३२१
सनः स्वर्षदतिद्विषःक्रतुश्छन्दऋतम्बृहत्॥ ६ ॥ २

१ २ १र र र र १ १ र र र
ए२। विदारायेसुवीरियाम्। भुवोवाजानाम्पतिर्वं
१ २ २ ५ १ १
शाꣳ२। अनुआ३१उवा२३। ई३४डा। ए२। मꣳहि
२ १ १ र ऽ२ २
ष्ठवज्रिन्नृञ्जसाइ। यःशविष्ठःशूरा२णा३१उवा२३। ई३४
५ १र र ऽ २ २ ५
डा। योमꣳहिष्ठोमघोर। ना३१उवा२३। ई३४डा।
२ १ र ऽ २ २ ५ १
अꣳशुर्नशोचा२इः। हा३१उवा२३। ई३४डा। चाइ।
१ र र १ २ २ १र १ १
कित्वोअभिनोनया। ईन्द्रो। विदेतमूरस्तुहाइ। इडा।
१ २ २१र १ १ १ २ २१र
ईन्द्रो। विदेतमूरस्तुहाइ। अथा। ईन्द्रो। विदेतमू
१ १ १रर र र २ २ २
रस्तुहाइ। इडा। ईशेहिशक्रस्तमूतयेहवा१मा२हाइ।

१२१२　　२　　४ ५　　१　　१
जेतारमपरा३। जाइताम्। सनःस्वर्षदता२३चोइ।
१ २　　१　१११११　　१ १　　२ १
हाइषा३१उवा२३। इट्इडा२३४५। क्रातूः। क्रन्द
१ . १ १११
कृतारम्वृधात्। इडा२३४५॥--

अथ द्वितीयाया ऋचि प्रथमं द्विपदा माह—“विदाराये सुवीर्यम्भुवोवाजानाम्पतिर्वशाᳯअन्विति। हे इन्द्र। “सुवीर्य” शोभनोवीरः पुत्रः शोभनपुत्रोद्भव-सामर्थ्यम्। यद्वा, शोभनवीर्यं युद्धादिष्वपराजयं “विदाः” लम्भय प्रापय। किमर्थम्? “राये” धनार्थम् धनं रचितु मित्यर्थः। “वाजानां” सेनानां बलानां वा “पतिः” स्वामी त्वं “भुवः” भवसि। “वशान्” वशेः कर्मणिवशिरण्योरित्यप्रत्ययः। काम्यमानानर्थान् “अनु” अभि लक्ष्य यथाकाम मित्यर्थः। यद्वा वशांस्त्वदधीनान् यजमानान् “भुवः” भावयसि [भवतेः पञ्चमलकारे (पा० ३, ४, ७) रूपम्। “भूसुवोस्तिङि” (पा०७,४,८८)—इति गुण-प्रतिषेधः॥

अथ स्तोयमाग माह—“मंहिष्ठवज्रिनृञ्जसेयःशविष्ठः शूराणाम्। योमंहिष्ठोमघोनाम्”—इति। हे “मंहिष्ठ” अतिशयेन बलवन्! “यः” च “मघोनां” मघशब्दो धनवाची तद्वतां मध्ये मंहिष्ठः अतिशयेन दाता तस्म्,दस्माभिर्बनार्थं प्रसाध्यसे॥

४८ख,

अथोपसर्गभाग माह—"अंशुर्न शोचिः। चिकित्वोऽभिनोनया"-इति "अंशुर्न" व्याप्त आदित्य इव शोचिर्दीप्तो भवतीन्द्रः [ शुच दीप्तो (भ्वा० आ०)] शुचः [शुचेर्मत्वर्थीयलोपः ] शोचिष्मान्। अथ प्रत्यक्षस्तुतिः—हे "चिकित्वः" चिकित्वन् [ मतुवसोरुसम्बुद्धौ छन्दसि (पा०८,३,१)"--इति रुत्वम् ] ज्ञानवन्निन्द्र! "नः" अस्मान् अभि लक्ष्य "नय" धनादि प्रापय॥

अथ भागद्वयं मिलित्वाह—"इन्द्रोविश्वेतमुस्तुहि। ईशेहि शक्रः"—इति। "इन्द्रः" परमैश्वर्ययुक्तः। "विश्वे" विद्यते सर्वैर्ज्ञायते "तमु" तमेवेन्द्रं "स्तुहि" स्तुतिं कुर्विति। ऋषिरात्मानमेव शास्ति। "हि" यस्मात् "शक्रः" शत्रु-हनन-समर्थ इन्द्रः "ईशे" ईष्टे सर्वस्येति तस्मात् तमेव स्तुहीति समन्वयः॥

अथ आकारभाग माह—"तमूतयेहवामहेजेतारमपराजितम्। सनःस्वर्षदतिद्विषः"—इति। "तम् इन्द्रम्" "ऊतये" अस्मद्रक्षणार्थं "हवामहे" आह्वयामहे। कीदृशम्? "जेतारं" युद्धेषु शत्रुजयशीलं [ ताच्छील्ये तृन् प्रत्ययः (पा०३,२,१३५)]। अतएव अपराजितं न क्वाप्यन्यैः पराजितम्। "सः" इन्द्रः "नः" अस्माकं "द्विषः" द्वेष्टॄन् "अति स्वर्षत्" अत्यर्थ मुपतपतु विनाशयतु। स्वृ शब्दोपतापयोरित्यस्मात् पञ्चम-लकारे रूपम्। अथ वा

---

* "इन्द्रोऽतिवर्ष-कर्मणः"—इति निरु० दै० ४, ८।

( तृतीया स्तम्भः )

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रन्धनस्यसातये हवामहे जेतारमपराजितम् ।

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
सनःस्वर्षदतिद्विषःसनःस्वर्षदतिद्विषः ॥ ७ ॥

१ २ ३ १ २ ३ १र २र
पूर्वस्ययत्तेअद्रिवोꣳशुर्म्मदाय ।

३ १र २र ३ १ २
सुम्नआधेहिनोवसोपूर्त्तिःशविष्ठशस्यते ॥

३ १उ ३ २ ३ १र २र ३ १ २
वशोहिशक्रोनूनन्तन्नव्यꣳसन्यसे ॥ ८ ॥

स्वरतिर्गतिकर्मा (निघ० २,१४,५४) अस्मान्तः अनूनतिगमयतु अतिपारयतु । तथा च बह्वृचाः—"सनः पर्षदित्यामनन्ति ॥

अथोपसर्गभाग माह—"क्रतुञ्छन्दऋतम्बृहत्"—इति । अनुहननामन्तरं "क्रतुः" अस्माभिरनुष्ठीयमानं कर्म * । "छन्दः" † गायत्र्यादिकं अक्षरलक्षणम् । "ऋतम्" उदकं ‡ सोमरस इत्यर्थः । यद्वा ऋतं सत्यभूतं ¶ कर्मफलं तत्सर्वं "बृहत्" प्रभूत मस्त्विति शेषः ॥ (४-५-६) ॥

---

* "क्रतुः"—इति कर्मनामसु एकादशं नैघण्टुकम् २, १ ।

† "छन्दांसि छन्दनात्"—इति निरु० दै० १, १२ ।

‡ "ऋतम्"—इति उदकनामसु चतुष्पञ्चाशत्तमं नैघण्टुकम् १, १२ ।

¶ "ऋतम्"—इति सत्यनामसु षष्ठं नैघण्टुकम् ३, १० ।

